Reg. No. C 10



Vol. XXXXI. | May 1958

No. 1 | १८८० शकीये

४१श-वर्षस्य | वैशाखे

१म-संख्या | मासे





# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1-4d

# Sanskrit Sahitya Parishat Series

( Revised up to December, 1957 )

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chaudra Siddhantabhushan. Re. 1-4; *R*e. 1. (for member).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan. Bhattacharya. (Out of stoke.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacbarya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Re. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. (*f*or members). Rs. 2. 8 ; Rs. 2.

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8. (Ou tof stock:)

7. **Durgotsava vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri- As. 4.

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Sbastri, M. A', B. L. Ph, D. Re. 1-8 ; Re. 1-4. ( for members ).

10. **Grahayaga-tattvam** of Raghunandana Bhaṭtacharya—Edited by Pt. Satish Chandra Siddhantabhushan. As, 14; As. 10 (for members).

( Cont. to. Gover 3rd Page )

Printed by Bishnupada Bhattacharya M. A. Kavyatirtha. at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghosc Lane, Calcutta and published by the same form Sanskrit Sahitya parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta-4.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXXI. No. 1 | १८८०-शकीये वैशाखे ४१श-वर्षस्य १म-संख्या | May 1958.

नमो नमः शाश्वतबान्धवेभ्यः संवत्सरादौ विनयान्वितानाम् ।
एषोऽञ्जलिर्दोषशतं क्षमन्तां दयालवस्ते सुहृदां प्रकृत्या ।

## मतिमञ्जरी

### वर्षमङ्गलम्

(निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः)

अनाद्यनन्त-प्रचलत्-कालप्रवाहस्याब्दत्वेन प्रकल्पितः कश्चनांशो व्यतीतः। समतीताब्दात् परं यस्तादृश एव कालः समुदेति तस्यैव नववर्षमिति नामधेयम्। नववर्षारम्भदिवसे जनैरनवद्यानि कर्माण्यनुष्ठीयन्ते मङ्गलदिवसश्च निर्विशेषं प्रतिपालितो भवति। रीतिरेषा विसंष्ठुलेऽपि काले यथापूर्वं समाचर्य्यते। यथा प्रथमदिनं मङ्गलानुष्ठानेनातियापितं तथैव वर्षमपि सामान्यतः कल्याणजनकत्वेन शास्त्राचारपरिपालनायासमाभिरुद्बोध्यन्ते जगज्जनाः। तत्र प्रातिस्विकसमुदाचारपरिपालनस्य कर्तव्य-

त्वेऽपि प्रधानतस्तैत्तिरीयोपनिषदः सदुपदेशः कश्चित् प्रथमतः स्मृतिपथं समुद्भासयति—"सत्यं वदे"ति। तदेतत् कायमनोवाग्भिः सत्यभाषणं सर्वधर्मस्य निदानं—पृथिव्यामशान्तेर्मूलकारणस्य दुर्नयादेः प्रतिरोधकञ्च। सत्यमेव धर्मः;—असत्यमेवाधर्म इति धर्माधर्मयोः सामान्यलक्षणम्। स एष धर्मो मनुष्यसाधारणानां,—न केवलं विप्रादितत्तद्वर्णविशेषाणाम्। अस्माभिरस्मिन् नूतनेऽब्देऽन्ततो वर्षं व्याप्य सत्यभाषणमेव धर्मत्वेन परिगृह्य तत्समाचरणं प्रतिज्ञाय च यदि तत् प्रतिपाल्यते, तदास्य जीवनप्रवाहस्य सत्यप्रतिष्ठया यादृश उत्कर्षविशेषः संसाधितो भविता—नासौ धर्मान्तरसहस्रानुष्ठानेनापि। पाञ्चभौतिकमपि नश्वरमपि शरीरमिदं तेजःसम्पन्नं धरणीधारणक्षमं भविष्यतीत्यत्र कः सन्देहावसरः। यदेतत् सत्यभाषणं वेदतत्त्वज्ञेन मनुना प्राधान्येन व्यवस्थापितं;—

सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः॥ इति

व्याख्यातञ्च कुल्लूकभट्टेन "यथादृष्टश्रुतं सत्यं ब्रूयात्, यथाप्रीतिसाधनं ब्रूयात् पुत्रस्ते जात इति। यथादृष्टश्रुतमप्यप्रियं पुत्रस्ते मृत इत्यादि न वदेत्। प्रियमपि मिथ्या न वदेत्। एष वेदमूलतया नित्यो धर्मः" इति। यथा ब्रह्मणि विज्ञाते सर्वमिदं विज्ञातं भवति, तथैव ब्रह्मस्वरूपे सत्ये विज्ञाते,—सत्यस्य सम्यगनुशीलनेन—सत्यप्रतिष्ठयेति यावत्, सर्वमिदं विज्ञातं भवति, सर्वं करतलामलकवत् प्रतिभायादित्येतावदर्थः। अपि वयं जगतः कल्याणाय तदन्तःपातिनः स्वस्य च क्षेमाय सत्यमाराधयामः? जगतः कल्याणं विना स्वस्य कल्याणं कदाचिदपि न सम्भवतीति सिद्धान्ते बुद्धिर्निवेशनीया। यद्येतद् विचारयितुं शक्यते, तदा स्वत एव लोभादिमूलिका दुर्नीतिर्दूरमपयास्यति। अपगतायां मायायां यथा जीवः स्वरूपोपलब्ध्या ब्रह्मरूपः स्यात्, तथापगतायां च दुर्नीत्यां मनुष्यः स्वत एव सत्यप्रतिष्ठो मङ्गलभाक् च भवितुमर्हति। एवं सर्वे जना यदि मङ्गलभाजः शुभचिन्तकाः स्युस्तदा कुतो वाशान्तेः

स्थानम्। क्व वा परधनलोलुपता। सत्यशिक्षाभ्यसनेनैव जगतः प्रकृतं कल्याणं सम्भविष्यति। न तदा काचिद् दुर्वलता—नीचवृत्तिर्वा मनसि समुदेष्यति। तदिमं शास्त्रोदिष्टं पन्थानं कदा भारतीया नेतारः समनुसरिष्यन्ति? तदर्थमस्माभिर्नवीने वर्षे भगवतः समीपे संप्रार्थ्य प्रतीक्ष्यते।

---

# कपालकुण्डला-रूपकम्

## ( पूर्वानुवृत्तम् )

### तृतीयं दृश्यम्

[ पान्थशालाकक्षः। ज्वलति च तत्रैकः प्रदीपः। ]

( ततः प्रविशति एकाकिनी मुक्तकेशी समुपविष्टा कपालकुण्डला )

कपालकुण्डला—( गायति )

त्वयि जगदखिलं वसति सलीलं
भुवनगतास्त्वन्मायामुग्धाः।
रविशशितारा: किङ्करनिकरा:
पालयन्ति तव नियममशेषम्॥
चालयसि त्वं येन पथैतं
जनमतिमूढं चलति तथैषः।
तवाभिलषितं प्रभवति सततं
वेद्मि कथं वत तव महिमानम्॥

नवकुमारः—( प्रविश्य ) एषा कपालकुण्डला एकाकिनी एव वर्त्तते।

यावदस्याः—समीपमुपसृत्य मतिवृत्तान्तमस्यै सम्प्रति निवेदयामि ।

( कपालकुण्डलासमीपं गन्तुमुद्यते नवकुमारे प्रविशति पेषमन्-सहिता मतिः । )

पेषमन्—जयति आर्य्यः । एषा देवी प्राप्ता ।

नवकुमारः—( मत्यभिमुखीभूत्या ) स्वागतं भवत्यै ।

मतिः—चलतु महाभाग ! भवतः पत्नीसविधे परिचिता भवितुमिच्छामि ।

नवकुमारः—नासीत्तत्र किमपि अलङ्कारधारण—प्रयोजनम् । न विद्यते किमपि भूषणं मम सहधर्म्मिण्याः ।

नवकुमारः—एतु एतु भवति ! ( पेषमन्सहितया मत्या सह कपालकुण्डला-समीपमुपसृत्य ) भद्रे ! इयं मे धर्म्मपत्नी ।

मतिः—( आत्मगतम् ) अहो मधुरता अस्या रूपस्य ।

नेदृशं दृश्यते रूपं राजान्तःपुरिकास्वपि ।
ललामभूता नारीणां विधात्रैषा विनिर्म्मिता ॥

कपालकुण्डला—( स्वगतम् ) का पुनरियं रमणी विकटोज्ज्वलवेशा !

मतिः—( सादरं कपालकुण्डलाया मुखमुन्नमय्य नवकुमारं प्रति ) सत्यमेवोक्तं भवता । नैतादृशं कुसुमं राजोद्यानेऽपि फुल्लति । (स्वाङ्गादाभरणान्युन्मुच्य कपालकुण्डलां तैर्भूषयति । )

नवकुमारः—किमेतत् ?

मतिः—इमानि आभरणानि ईदृशस्यैव अङ्गस्य अनुरूपाणि । अतोऽहम् एनाम् अलङ्कृतवती । भवान् अपि कदाचिद् भूषयित्वा प्रगल्भाम् एनां विदेशिनीं स्मरिष्यति ।

नवकुमारः—कथमहं भवत्याः सकाशाद् एतानि बहुमूल्यानि अलङ्करणानि ग्रहीष्यामि ?

मतिः—भगवत्-प्रसादात् मम अपराण्यपि विद्यन्ते । नाहमेतेन निराभरणा भविष्यामि । एतैरेनामलङ्कृत्य यदहं सुखमनुभवामि, कथं त्वया तद्व्याहन्यते ? (कपालकुण्डलां प्रति) भगिनि ! न विस्मर्त्तव्या

इयं मन्दभागिनी। (नवकुमारं प्रति) आदिशतु भवान् मां गमनाय।

नवकुमारः—यद्भवत्यै रोचते।

पेषमन्—(मत्या सह कतिचित् पदानि गत्वा) आश्चर्य! कोऽसौ?

मतिः—मम स्वामी।

(निष्क्रान्ताः सर्व्वे।)

---

## तृतीयोऽङ्कः

### प्रथमं दृश्यम्

[ आग्रानगर्य्यां प्रमोदोद्यानस्थितं सुसज्जितं मतिमन्दिरम्। ]

(ततः प्रविशति गीनरता मतिः।)

दृष्टमा जन्मनो रूपं
न तृप्तं लोचनं मम।
श्रुतं तन्मधुरं वाक्यं
न तृप्तिं श्रवणं ययौ॥
नीताः केलिमबुद्ध्वैव
रभसाद् मधुरात्रयः।
युगलक्षं समाश्लिष्य
हृदयं नैव शीतलम्॥
कत्यत्र रसिका नित्यं
मज्जन्ति रससागरे।
रसस्यानुभवस्तेषाम्
एकस्यापि न दृश्यते॥

रससागरमग्नानां
जीवानां चित्ततृप्तये ।
वक्ति विद्यापतिर्लक्षे
नैकोऽपि लभ्यते जनः ॥

पेषमन्—( प्रविश्य ) जयति देवी । ( उत्तरमनासाद्य मतिं च चिन्ताकुलामाकलय्य समीपमुपसृत्य ) देवि ! किमसि चिन्ताकुल !

मतिः—अये पेषमन् ! आस्यताम ।

पेषमन्—( उपविश्य ) देवि ! कथ्यतां किमसि चिन्ताकुला ?

मतिः—पेषमन ! श्रूयताम् मृत्युकाले जाहाङ्गीरं राज्ये अभिषिञ्चता आकवरशाहेन प्रदर्शितो बुद्धेः परमोत्कर्षः विफलीकृतश्च मे सकलः प्रयत्नः । नूनमचिरादेव मेहेरुन्निसां परिणेष्यति जाहाङ्गीरः । तत् कुत्र मे दुरारोहिणी आशा ?

पेषमन्—तत किमिदानीं करिष्यति भवती ?

मतिः—त्यक्ष्यामि अहमिदानीम् आग्रानगरी-सम्बन्धम ।

पेषमन्—कुत्र वा यास्यति देवी ?

मतिः—वङ्गेषु । तत्रैव निवत्स्यामि । शक्यते चेत् कस्यापि महानुभवस्य गृहिणी भविष्यामि ।

पेषमन्—सत्यमेवायं नवीनः परिहासः ।

मतिः—नायं परिहासः । नीतानि मया बहूनि दिनानि आग्रा-नगर्याम । आ बाल्यादेव मे सुखतृष्णा अतीव प्रबला । तस्या एव तृप्तये वङ्गदेशं परित्यज्य आग्रानगरीं प्राप्ता । ऐश्वर्य्यगौरवादिकं सर्व्वमेव लब्धम । किन्तु एकस्यापि मुहूर्त्तस्य कृते परितृप्तिर्मे न सञ्जाता । त्रीन् वत्सरान् आग्राप्रासादेषु मया यत् सुखं न लब्धम्, उत्कलदेशतः प्रत्यागमनसमये एकस्यामेव रजन्यां तल्लब्धम् ।

पेषमन्—देवि कथं भवत्या एतादृशी कुप्रवृत्तिः सञ्जाता ?

मनिः—नेयं कुप्रवृत्तिः। एतावन्तं कालमहं हिन्दूनां देवमूर्त्तिरिवासम्। वहिर्देशस्तावत सुवर्णरत्नादिभिः खचितः अन्तःप्रदेशश्च पाषाणमयः। सम्प्रति सकृदेव अन्विष्य द्रक्ष्यामि पाषाणमध्ये रक्तप्रवाहयुक्तशिरा-विशिष्टमन्तःकरणमस्ति न वेति। ( स्वदेहादलङ्कारादिकमुन्मोच्य ) पेषमन ! बहूनि दिनानि त्वं मम सहचारिणी वर्त्तसे। अद्य प्रभृति तव दूरवर्त्तिनी भविष्यामि। तस्माद् गृहाण एतानि आभरणानि। ( पेषमन-हस्ते आभरणादिकं दातुमिच्छति। )

( क्रमशः )

---

# विश्वनाथाष्टकम्

[ निबन्धकः—भट्टपल्लीय ७रामकृष्णन्यायर्कनतीर्थः ]

सुरनरवरपूज्या स्थापिता शूलशीर्षे,
यमभयपरिहारायैव मृत्युञ्जयेण।
नयनयुगलमद्य प्रीणयत्युत्तरास्यं,
वहदमरवहन्ती काञ्चिका काशिका मे ॥१॥
तटभुवि शतशः सच्छ्रेणि-निश्रेणिरम्या,
तदुपरि सुरसद्मस्पर्द्धि वर्द्धिष्णुहर्म्या।
प्रतिपथमुपगीतैर्देवदेवस्तवौघैः
श्रवणमपि कृतार्थं काशिका मे विधत्ताम् ॥२॥
वरदहरपदाब्जद्वन्द्वमन्दारमाला
शुभपरिमललीलाभूरियं घ्राणयुग्मम्।
सुखयति वत खेदं मा भज त्वं रसज्ञे !
वितरति दशहस्तैर्भोज्यमत्रान्नपूर्णा ॥३॥

करधृत-नृकपालव्यालमालाकरालो
रजतगिरिविशालव्योमकेशो जटालः
शिशुशशधरभाल-ज्ञानवापीमरालो
जयति जयति देवस्त्र्यम्बको लोकपालः ॥४॥

जयति जयति काशी श्रेयसां कल्पवल्ली
विबुधसुबुधसिद्धक्षेत्रमानन्दपल्ली,
त्यजति य इह देहं मोहबन्धं विधूय
व्रजति स पदमात्मारामममावृत्तिशून्यम् ॥५॥

गुरुरिह शिव एकस्तारको मन्त्र एको,
मरणसमय एको दानयोग्यो हि कालः ।
नृ-पशु-पतग-कीटा दीक्षणीयाः समस्ताः,
किमिव न सुकरं स्याद्विश्वनाथे प्रसन्ने ॥६॥

यमसृतकणबन्धोर्गन्धवाहो धुनीते ।
विषम-रविजतापं यावगाढ़ा शुभाय ।
जलनिधिमुपयान्ती निर्गतानन्तकाया-
ज्जयति जयति देवी जाह्नवी पुण्यतोया । ७॥

जितममरगरिष्ठैर्मृत्युरत्रापवर्गः,
कृतमिह गृहयज्ञैस्त्राणकर्त्ता हि भर्गः ।
यमनियमशमाद्यैः साधनैर्दुर्घटं यत् ;
तदिह मरणमात्राद्वर्णयामः किमन्यत् ॥८॥

---

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

## श्रीचैतन्यचरितामृते मध्यलीलायां

### द्वितीयः परिच्छेदः

( पूर्वानुवृत्तः )

"विच्छेदेऽस्मिन प्रभोरन्त्यलीलासूत्रानुवर्णने ।
गौरस्यकृष्ण-विच्छेदप्रलापाद्यनुवर्ण्यते ॥१॥"

जयतात् कृष्णचैतन्यो नित्यानन्दो जयत्युत ।
जयत्वद्वैतचन्द्रश्च गौरभक्ता जयन्ति च ॥१
अथ यान्यवशिष्टानि वर्षाणि द्वादश प्रभोः ।
तानि श्रीकृष्ण-विच्छेद-स्फूर्तिरासीन्निरन्तरम् ॥२
राधिकाया यथा चेष्टा बभूवोद्धव-दर्शनात् ।
रात्रिन्दिवं तथावस्था बभूव श्रीमहाप्रभोः ॥३
विरहोन्माद एवासीत् प्रभोस्तत्र निरन्तरम् ।
सदा भ्रान्तिमयी चेष्टा सप्रलापञ्च भाषितम् ॥४
रोमकूपादसृक्स्रावो दशनानाञ्च लोलता ।
क्षणेनोपचयोऽङ्गानां क्षणेनापचयः पुनः ॥५
गम्भीराभ्यन्तरे रात्रौ निद्रालेशोऽपि नाभवत् ।
भित्तौ घृष्टं शिरोवक्त्रं बभूव क्षतविक्षतम् ॥६
प्रभुः कपाटरुद्धेऽपि द्वारत्रये वहिरागमत् ।
सिंहद्वारेऽपतज्जातु सिन्धुवारिणि जातु च ॥७

चटकं पर्वतं पश्यन् गोवर्द्धन-गिरिभ्रमात् ।
रुदन्नार्तस्वरेणोच्चैरभ्यधावन्महाप्रभुः ॥८

पश्यन्नुपवनोद्यानं मेने वृन्दावनञ्च तत् ।
तत्र गत्वा जगौ नृत्यन् क्षणान्मूर्च्छामगात् प्रभुः ॥६

विकारा ये च भावानां श्रूयन्ते न कुतश्चन ।
त एव पर्यलक्ष्यन्त स्फुटं श्रीविग्रहे प्रभोः ॥१०

पाणिपादे पृथग्भूता अन्योन्यं सर्वसन्धयः ।
वितस्तिव्यवधानेन यथास्थानं त्वचः स्थिताः ॥११

यदा तस्य शिरोहस्तपदं देहान्तराविशत् ।
तदा स प्रतिभाति स्म कूर्माकारो महाप्रभुः ॥१२

इत्थं महाद्भुता भावा देहे तस्य प्रकाशिताः ।
शून्यता मनसि व्याप्ता हाहाहेति-ध्वनिर्मुखे ॥१३॥

किं करोमि क्व लप्स्येऽहं श्रीव्रजेश्वरनन्दनम् ।
मुरलीवदनः प्राणनाथो मे कुत्र वर्त्तते ॥१४

कस्य वा कथयिष्यामि दुःखं मे कोऽवगच्छतु ।
व्रजराजकुमारेण विना वक्षो विदीर्यते ॥१५

इत्येवं विललापासौ प्रभुर्विह्वलमानसः ।
रायस्य नाटकश्लोकानपठच्च निरन्तरम् ॥१६

"तथाहि जगन्नाथवल्लभनाटके तृतीयाङ्के नवमश्लोके मदनिकां प्रति श्रीराधिकाया वाक्यम्—

प्रेमच्छेदरुजोऽवगच्छति हरिर्नायं न च प्रेम वा
स्थानास्थानमवैति नापि मदनो जानाति नो दुर्बलाः ।
अन्यो वेद न चान्यदुःखमखिलं नो जीवनं वाश्रवं
द्वित्राण्येव दिनानि यौवनमिदं हाहा विधे का गतिः ॥२

अस्यार्थः,—यथारागः।"

कृष्णोनागरशेखरः सखि शठो नारीवधैकव्रतो
भग्नान्मे प्रणयाङ्कराद्विगलितं दुःखासवं नापिवत्।
अज्ञात्वा नियमं विधेः सुखकृते प्रेमा मयाराधितो
दुःखं तद्विपरीतमाप्तमधुना प्राणाः प्रयान्त्येव मे ॥१७

मूढोऽयं प्रणयः स्वभाव-कुटिलो नोदेति योग्यास्पदं
नास्त्येवास्य विवेचने सदसतोः स्वल्पापि शक्तिः पुनः।
हन्त क्रूरशठप्रियेण सुदृढं कण्ठे च बाहुद्वये
बद्धाहं गुणशृङ्खलैर्नहि ततः शक्नोमि मोक्तुं निजम् ॥१८॥

हिंस्रः पञ्चशरान् स्मरोऽतनुरपि प्रास्यन्नजस्रं मुहु-
र्विद्धाङ्गेष्वबलास्तपम् जरयति प्राणांस्तु गृह्णाति नो।
आधिं वेत्त्यपरस्य नान्य इति यत् सत्यं परा का पुन-
र्नापि प्राणसखी च वेद दिशती मां धैर्यमालम्बितुम् ॥१९

( क्रमशः )

---

# वेदान्तविमर्शः

[ निबन्धक :—श्रीचारुकृष्णदर्शनाचार्यः ]

( पूर्वानुवृत्तम् )

सर्वस्यैव वस्तुनः सत्यत्वाद् येन केनापि सार्द्धं केवलं संबध्यते, न तु सर्पादि रज्ज्वादिवत् कस्यचिदधिष्ठानस्यापेक्षा। यत्रैव सादृश्याद् विभ्रमस्तत्रैव भ्रमजनकसादृश्याधायकतया सदृशस्य कस्यचिदपेक्षा, स एवाधिष्ठान-मुच्यते, न तु सर्वत्र तदपेक्षेति मायिकसृष्टौ नाधिष्ठानं किञ्चित्। न च सादृश्याद् ब्रह्मणि जगद्विभ्रमो वैलक्षण्यात। तदुक्तं "विशुद्धं चेतनं

ब्रह्म जगज्जडमशुद्धिभागि'ति। न च कश्चिदपि स्वभ्रमार्थं सर्पोत्पादने रज्जुमुपादत्त इति भ्रमे नाप्युपादानापेक्षा। उपादत्ते च घटार्थं मृत्तिकां कुलालः, पटार्थं च कुविन्दस्तन्तून। न च रज्ज्वां सर्पो जातो मृत इति कश्चिद् ब्रूते, ब्रूते च कपाले घटो जातो भग्नश्चेति। तरे वोच्यते "नासीदस्ति भविष्यतो"ति। नचेश्वरो रज्जुसर्पं सृजति तस्य मायाविवत् रज्ज्वाद्यनपेक्षणादित्यनुपादानं रज्जुः सर्पस्येति दोषवशाज् ज्ञानमात्रं जातं विनष्टं च विशेषदर्शनादित्येव तत्त्वम्। न च ब्रह्मविवर्तो जगदिति श्रुतिरस्ति सूत्रं वा, परं ब्रह्मविकार एवेति। "आत्मकृतेः परिणामात" "वाचारम्भणं विकारो नामधेयमि"ति। ब्रह्मणस्तु जगत उत्पादविनाशाश्रयत्वादुपादानत्वं, वृक्षादेः पृथिवीवत, यथा पृथिव्यामोषधयः सम्भवन्तीति"। "उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि"त्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवती"ति परिणामदृष्टान्तेत ब्रह्मणः परिणामिकारणत्वमेव दर्शितं श्रुत्या सूत्रेण च "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"ति। न च विवर्त दृष्टान्तलेशोपि परिणामिकारणत्वादेवोपादानत्वं ब्रह्मणः, तथापि तस्य पूर्णत्वमेवाचिन्त्यैश्वर्यत्वात "पूर्णात पूर्णमुदच्यते"। इति श्रुतेः, यथा कामधेनु-कल्पवृक्षादयः, तदेतत सूत्रितम् "आत्मनि चैवं विचित्राश्चैव ही"ति।

चैतन्यानन्दघनाशेषमहिमात्यूर्जितं ब्रह्मैव बहुभवनसङ्कल्पाच्चैतन्यांशतिरोधानेनानन्दांशलेशेन विचित्रनामरूपात्मकजगद्रूपेण स्वयं स्वात्मानं व्याचकार। तथा च श्रुतिः तदात्मानं स्वयमकुरुते"ति।

स्थितौ ब्रह्मणः सविकारत्वस्येष्टत्वात प्रलय एव तद्वत प्रसङ्गदोष उद्भावित आचार्येण, "अपीतौ तद्वत् प्रसङ्गादसमञ्जसमि"ति। "अतोऽत्राल्पं चेदमुच्यते" इति सूत्रकारन्यूनताप्रदर्शनं न साम्प्रतं, मायावादे च नाक्षेपावसरो मिथ्यासर्पेण रज्ज्वा अणुमात्रेणाप्यसंसृष्टत्वादिति ज्ञेयम्।

जगतो ब्रह्मभिन्नत्वेऽपि नोत्पत्तिनाशादिदोषवत्त्वप्रसङ्गो ब्रह्मणः, मृद्घटयोरभेदेऽपि घटस्यैवोत्पादनाशदर्शनादुच्यते च घटो जायते नश्यति चेति, न तु मृदुत्पद्यते नश्यति चेति। ब्रह्मणश्च भौतिकरूपादि-राहित्येनाकाशवदनुपलिप्तत्वात्। तथाच श्रुतिः ;—

"अरूपमस्पर्शमशब्दमव्ययम् तथाऽरसं नित्यमगन्धवच्च यत्॥" इति, "असङ्गो न हि सज्जतेऽसितो न व्यथते" इति च। आह च स्मृतिः,—

"यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते" ॥ इति,

श्रुत्या च सूर्यदृष्टान्तेनैतत् परिहृतम्

"सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥ इति

नात्र बौद्धानां रज्जुसर्पादिदृष्टान्तेनान्यथा व्याख्यानं युक्तं, मिथ्या-सर्पादीनां तुच्छत्वात् जगतश्च सत्यत्वादतः श्रुत्या सूर्यदृष्टान्तः प्रदत्तः स्मृत्या चाकाशदृष्टान्तो, न तु रज्जुसर्पादेर्गन्धोऽपि प्रस्थानत्रिके इति ज्ञेयम्।

मायिकैश्च शपथेन श्रौतपरिणामदृष्टान्तहानेन बौद्धविवर्तदृष्टान्त एवाद्रियते वेदान्तप्रमोषार्थमिति। ब्रह्मणोऽद्वितीयत्वश्रुतिश्च न सर्वदा प्रपञ्च-निषेधपरा, किन्तु सृष्टेः प्रागेव, सृष्टेः प्राग् ब्रह्म निष्प्रपञ्चमासीत् पश्चात् सप्रपञ्चं भवति। इदं च "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमि"त्य ग्रेपदात् सदेवेत्येवकाराच्च प्राप्तम्। पश्चात् "तदैक्षत बहु स्यां प्रजायेय तत्तपोऽसृजते"ति बहुभवनसङ्कल्पात् सत्यसङ्कल्पस्य भगवतो बहुभावे प्राप्ते ब्रह्मणः सप्रपञ्चत्वं श्रुत्यैव स्वहस्तितम्। तथापि कार्यकारणयोस्ता-दात्म्यादभिन्नत्वमेवेति स्थितावपि नाद्वैतहानिः। यथाह श्रुतिः "यत्र हि द्वैतमिव भवती"ति। "तदनन्यत्वमारम्भणशब्दादिभ्य" इति सूत्रकृद-प्याह। अनन्यत्वमपि न तत्सत्तातिरिक्तसत्त्वाभाववत्त्वम्, किन्तु तत्-सत्ताधीनसत्ताकत्वमेव रज्ज्वभिन्नः सर्प इत्यप्रयोगात् प्रयोगाच्च तन्तवः

पटः सुवर्णं कुण्डलमिति, अर्थक्रियाकारित्वानापत्तेश्च। सत्ताभेदेऽप्यभेदः प्रत्यक्षे लोकसिद्धः, नहि प्रत्यक्षे किञ्चिदप्यसम्भवीति न्यायात। वेदस्य च भगवतः सर्वज्ञत्वात "सर्वं खल्विदं ब्रह्मे"ति सर्वस्य ब्रह्मतादात्म्यम्। सत्ताभेदाच्च तन्तुपटयोरभेद इति द्विवचनोपपत्तिः। तस्मात सप्रपञ्चत्वेऽपि ब्रह्मणो नाद्वैतहानिरित्यवदातम्।

( क्रमशः )

---

# योगिभक्तचरितम्

( काव्यम् )

चतुर्थः सर्गः

(निबन्धकः—श्रीकाश्यपकविः)

( पूर्वानुवृत्तम् )

न सोढुं शक्यते नाथ ! भवदुःखमतः परम्।
मार्जयिष्यति दुःखाश्रु को वा त्वामन्तरेण मे ॥२६
यावन्तो वासरा यान्ति तावदेव दिवानिशम्।
करुणामय हे नाथ ! वर्द्धते शमनाद् भयम् ॥२७
देहि देहि गुरो ! देहि तव श्रीचरणाश्रयम्।
शमयामि भवज्वालां जीवनञ्चापि तर्पये ॥२८
कुर्वे तावदिमां भिक्षामन्ते च विहिताञ्जलिः।
प्राप्नुयां परमां भक्तिं यथा जन्मनि जन्मनि ॥२९
तावकं श्रीपदं देहि वहामः शिरसा वयम्।
भवामो मृत्युजेतारः सर्वेऽद्य बहुभाग्यतः ॥३०

एवं तत्त्वोपदेशेन रात्रिः समधिका यदा ।
ननीलालं विना सर्वे तदा स्वं स्वं गृहं गताः ॥३१

गुरुणासौ समादिष्टो ननीलालो महामनाः ।
गृहान्तरं गतः शिश्ये भावमुग्धं गुरुं स्मरन् ॥३२

भावमुग्धो गुरुः सर्वां रात्रिं जागरितः स्थितः ।
प्रातरागत्य दृष्टोऽसौ ननीलालेन तद्‌गृहे ॥३३

गीतं स्वरचितं गायन् वङ्गभाषामयं शिवम् ।
अश्रुभिः प्लावयन् वक्षो योगासनमुपाश्रितः ॥३४

यस्य तात्त्विकगीतस्य रूपं संस्कृतवाङ्मये ।
संस्कृतज्ञाः प्रगायन्ति प्रोच्यमानप्रकारकम् ॥३५

रात्रिः प्रभाता हे चित्त ! हरिं स्मर हरिं स्मर ।
हरिं स्मृत्वा समुत्तिष्ठ दिनं यास्यति ते शुभम् ॥३६

श्रीहरिर्मङ्गलमयस्तस्य नाम प्रगृह्णतः ।
क्षीयते दुःखसङ्घातो जायते च सदा शिवम् ॥३७

भवकोलाहलस्तोमैस्तस्य वा विस्मृतिर्भवेत् ।
सम्बोधय हरिं तस्मात्तेनाहः सफलं कुरु ॥३८

उदयेन यथा भानोस्तमःस्तोमः पलायते ।
उदयेन तथा नाम्नः पापराशिर्गमिष्यति ॥३९

कथं संसारसंग्रामे जयी स्या इति चिन्तया ।
आदितः श्रीहरेर्नाम्ना सबलं कुरु मानसम् ॥४०

विपत्तिभञ्जनो विष्णुर्यत्नतस्तमनुस्मर ।
दूरे यास्यन्ति यास्यन्ति तव सर्वा विपत्तयः ॥४१

कारणं जीवनार्थस्य हरिनाम मनोहरम् ।
तत् स्मर त्वं यथाकामं जीवनं सफलं भवेत् ॥४२

सुपवित्रं हरेर्नाम यत्र तत्र मनः स्मर ।
पवित्रं भवितासि त्वं शान्तिं प्राप्स्यसि निर्मलाम् ॥४३

स्मरणीयो हरिः प्रातस्त्यक्त्वा तन्नाम मङ्गलम् ।
समुत्तिष्ठति या नारी नरो वा तच्छिवं कुतः ॥४४
अथामृतमये गीते सुसमाप्ते गुरोस्तदा ।
ततोऽभूत तत्पदोपान्ते ननीलालो गुरुप्रियः ॥४५
भावावेशविनिर्मुक्तः क्रमेण तदनन्तरम् ।
सुस्मितास्यः प्रफुल्लात्मा तं तदैक्षत सादरम् ॥४६
ननीलालस्तदा तस्मिन्नपूर्वं ज्योतिरैक्षत ।
अपूर्वज्योतिषा तेन प्रदीप्तं तद्गृहान्तरम् ॥४७
पुरो विभ्राजमानस्य विष्णोरिव वपुष्मतः ।
स्मितं तस्य प्रसादश्च मेने देवसुदुर्लभम् ॥४८
आत्मानं लब्धसर्वार्थं बुबुधे तेन तेन च ।
ततः प्रभृति सर्वस्वत्यागी स गुरुमन्वगात ॥४९
त्रिदिवादवतीर्णस्य दैवतस्येव सादरम् ।
गुरोः सेवानुषङ्गेण कालस्तस्य गतोऽखिलः ।५०
कर्तव्यार्थेषु नित्येषु गुरोरव्यभिचारिणः ।
स क्रियायोग्यवस्तूनां सर्वेषां संग्रहं व्यधात ॥५१
गुरूपदेशं निःशेषमनयत कर्मणा फलम् ।
गुरूपदिष्टमार्गेण योगचर्यामवर्तयत ॥५२
गुरोः क्लेशप्रहाणाय प्राणान पणयति स्म सः ।
लेशमात्रं गुरोः सौख्यं परमार्थममन्यत ॥५३
गुरोः पार्श्वगतस्तस्थौ सर्वदा तदपेक्षितः ।
सेवया चास्य सन्तुष्टः सुतरामभवद् गुरुः ॥५४
नाम्ना ध्यानप्रकाशेति ननीलालं दृढव्रतम् ।
आजुहाव स शिष्येषु सर्वेषु प्रियकृत्तमम् ॥५५

( क्रमशः )

# १८७९ शकाब्दीयसंस्कृत-साहित्य-परिषत्पत्रिकास्थ-विषयानुक्रमणी

( वर्णक्रमानुसारिणी )

11. **Pradhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharys—Edited by Pt. Bamacharan Kvyatirtha. As. 12 ; As. 10. (for membera).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re. 1-8 ; Re, 1-4 ( for members ).

14. **Naia-damayantiyam** ( a new Drama ) of MM, Kalipada Tarkacharya. Rs. 1-8 ; Rs. 2 ( for members ).

15. **Prashastapada-bhashyam**—Edited by MM, Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2 ; Re. 1-8 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr, Pashupatinath Shastri M. A,, B. L., Ph. D with the assistance of Prof. Chintaharan Chakravarti, M. A. Rs 5 ; Rs. 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri, Rs. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A, Rs. 7-8 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM, Kalipada Tarkacharya. Rs 7 ; 6 ( for members).

21 **Manodutam** of Vishnudasa—Ed. by prof. Chintahara Chakravarti, M. A. Re. 1-4 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs, 2 ; Re. 1-8 ( for members).

23. **Devisatakam** of Mahmahopadhyaya Krishanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M. A., As. 8.

25. **Satyanubhavam** ( a new Mahakavya ) of MM, Kali pada Tarkacharya, Rs. 5 ; Rs. 4-8 ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re. 1-8 ; Re. 1-4 ( for members ).

---

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदः चतुःषष्ट्यधिकत्रयोदशशततम-( १३६४ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वेयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट्,

संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

---

# अधस्तनग्रन्थाः

## सद्य एव प्रकाशिता भवितारः

१। हलायुध-प्रणीतं ब्राह्मण-सर्वस्वम्। अध्यापक—श्रीदुर्गामोहन-भट्टाचार्य एम. ए. सांख्यतीर्थ-सम्पादितम्।

२। माणवक-गौरवम्—म. म. श्रीकालीपदतर्काचार्यप्रणीतमपूर्वमभिनयोपयोगिनाटकम्।

३। कपालकुण्डलारूपकम्—अध्यापक—श्रीविष्णुपद भट्टाचार्य एम. ए. काव्यतीर्थसङ्कलितमभिनयोपयोगिरूपकम्।

४। चित्रचम्पूः—वाणेश्वरविद्यालङ्कारकृता—अध्यापक—श्रीजानकीनाथ-शास्त्रिसम्पादिता।

Reg. No. C 1073

Vol. XXXXI. July 1958

No. 3 १८८० शकीये

४१श-वर्षस्य आषढे

३य-संख्या मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री-काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1-4d

# Sanskrit Sahitya Parishat Series

( Revised up to December, 1957 )

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chandra Siddhantabhushana. Re. 1-4; *R*e. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan. Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacbarya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Re. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. (*f*or members). Rs. 2. 8 ; Rs. 2.

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8. Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri- As. 4.

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Sbastri, M. A', B. L. Ph, D. Re. 1-8 ; Re. 1-4. ( for members ).

10. **Grahayaga-tattvam** of Raghunandana Bhaṭtacharya—Edited by Pt. Satish Chandra Siddhantabhushana. As, 14; As. 10 (for members).

( Cont. to. Cover 3rd Page )

---

Printed by Bishnupada Bhattacharya M. A. Kavyatirtha. at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghosc Lane, Calcutta and published by the same form Sanskrit Sahitya parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta-4.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा-रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXXI. No. 3 | १८८०-शकीये आषाढे ४१श-वर्षस्य ३य-संख्या | July 1958.



## मतिमञ्जरी

### देवमातृको देशः

निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः

पुण्यमिदं भारतवर्षं प्रायो देवमातृको देशः । यत्र कृषिकर्मार्थं वृष्टिजलस्यावश्यापेक्षा वर्तते स देवमातृको देशः । उक्तञ्चामरसिंहेन भूमिवर्गे ;—

देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः ।
स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥

अत्यल्प एव भूखण्डे नद्यम्बुना कृषिकर्म चलति । नियतं दैवसहायेन यतः शस्यसम्पन्ना सुसमृद्धा च तेन देवभूमिरियमिति बुधैराख्याता । यज्ञाग्नौ संतर्पितस्तपनो वृष्टिं प्रयच्छतीति प्रामाणिको राद्धान्तः । यत उक्तञ्च वेदार्थज्ञेन मनुना,—

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

सोऽयं वैदिकयज्ञाचारः प्रायो विलुप्तोऽधुना । प्राचीनाचारपरिहारेण न केवलं वयं धर्महीना जाता, न केवलं पारलौकिकी क्षतिः संविहिता—अपि तु तत्त-

च्छास्त्रविहितकर्मपरित्यागेनान्नवस्त्रादिनित्यापेक्षितवस्तूनामभावसमुत्पादादैहिकी क्षतिरपि किं न समापादिता ?

आश्चर्यं खलु वैज्ञानिकैस्तथ्यमाविष्कृतं यत् सौरेण तेजसा समुद्रात् समुत्थापितं जलं नभोमण्डले वाय्वादिना मिलित्वा मेघाकारेण परिणमते तत्र का वापेक्षा यज्ञस्य दैवस्येति । अस्माकं महाकविरपि कालिदास उक्तवान्—

"धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः" ।

तत् किं तेनापि नाविष्कृतं किञ्चिद् वैज्ञानिकं तथ्यम् ?

ननु यज्ञीयवह्निसमुत्थो धूमो यदि वृष्टेरुपकरोति तथा को विशेषो यज्ञीयवह्निसमुत्थधूम-यन्त्रसमुत्थितधूमयोरञ्जनकुर्वद्रूपस्य साम्यादिति चेदत्रानुभवं पृच्छ । यतो यज्ञीयो धूमश्चक्षुरादेरनुद्वेजकत्वेन सर्वेषां प्रीतिदायकः यन्त्रीयधूमस्तु नितरामुद्वेगजनकत्वेन चक्षुषोः कालुष्यापादकत्वेन चाप्रीतिसम्पादक इत्यत्र किं वाङ्मात्रं संस्कारमात्रं वा प्रमाणपदवीमवगाहते ? नानुभवः ?

आस्तां तावदनया विचारणया । यस्य धर्मस्य नाममात्रश्रवणेनाधुनिका लज्जयाधोमुखा भवन्ति स एव धर्मः सर्वदा यथाशास्त्रमनुष्ठातव्यः—अन्यथा जीवानां स्थितिरपि जगति दुष्करा "धर्मो विश्वस्य जगतः प्रतिष्ठे"ति श्रुतेः । यं धर्मं विहाय वयं दुर्नीतिपरायणाः सर्वथा मनुष्यत्वविहीना जाताः—सर्वथा विविधान् क्लेशांश्चानुभवामः स एव धर्मः किं परित्याज्यः ? सर्वं नवं ग्रहणीयं—प्राचीनं परिहर्तव्यमित्येष न युक्तिसिद्धो नियमः । तत्रापि सदसतोः परीक्षा विचारश्च कर्तव्यतया किं न प्रतिभातः ? उक्तञ्च विचारनिपुणेन—

"पुराणमित्येव न साधु सर्वं
न चापि किञ्चिद्नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥"

तदेवं विचार्यैव सर्वं कार्यम् । भारतवर्षं तावदपूर्वो देशः । यत्र धर्मविहीना जनाः सुखं स्थातुं नार्हन्ति । यदि राष्ट्रं मन्वाद्यनुशिष्टमुपदेशं, कामन्दकीयनीतिशास्त्रोपदिष्टं न्यायधर्मं प्राचीनेभ्यस्तत्तत्स्वराष्ट्रपरराष्ट्रनीतिञ्चाधुनिकनीत्या

सह सामञ्जस्यं विधाय सर्वमनुतिष्ठेत् तदा भारतस्य सर्वं दुःखमपयास्यति। पर्जन्यः काले परिमितवर्षी भविष्यति—मानवहृदयाद् दुर्नीतिरपयास्यति शिक्षा-अनुगतार्था सती पुण्यभूमेर्मर्यादां संरक्ष्य जगतः कल्याणं साधयिष्यतीति। एतदर्थमस्माभिः शास्त्रसमालोचनापूर्वकं तदुपदिष्टमार्गेण सह वर्तमानमार्गस्य यथा-यथं संयोजनाय प्रेक्षावन्तो नेतारः समाहूयन्ते इत्यलमधिकप्रजल्पितेन।

---

# कपालकुण्डला-रूपकम्

तृतीयं दृश्यम्।

( पूर्वानुवृत्तम् )

मतिः—मम भाग्यदोषात् मम स्वामी मां परित्यक्तवान्। परमिदानीं महीपालस्य दासीं त्यक्तुं न शक्नुयात्।

जाहाङ्गीरः—प्रिये नास्ति मे तुभ्यं किञ्चिद् अदेयम्। किन्तु कथं मां विहाय यास्यसि ?

आकाशे किमु नैकस्मिन् सूर्याचन्द्रमसावुभौ।
विराजेतेऽथवा वृन्ते नैकस्मिन् कुसुमद्वयम्॥

मतिः—
फुल्लतस्तावदेकस्मिन् वृन्ते द्वे क्षुद्रपुष्पके।
न फुल्लति वतैकस्मिन् मृणाले कमलद्वयम्॥

( निष्क्रान्ता )

जाहाङ्गीरः—
अस्या रमण्या हृदयं नूनं पाषाणकल्पितम्।
अन्यथा नोपपद्येत प्रत्यादेशो ममेदृशः॥

( निष्क्रान्तः )

---

# चतुर्थोऽङ्कः

## प्रथमं दृश्यम्

[ सप्तग्रामस्थितं नवकुमारभवनम् ]

श्यामासुन्दरी—( कपालकुण्डलाया केशविन्यासं कुर्वती गायति )

तिष्ठति रात्रौ वदनमावृत्य
नलिनी कान्तवियुक्ता
भृङ्गं कर्षति विकाश्य कलिकां
मोदिताप्य निजदयितम् ।
नवदलकाशैः सुमधुरहासैः
तरुमेति वने लतिका
ओघे पतिते तटिनी हृदये
जलमेति मुदा जलधिम् ॥
लज्जाहीना कैरविणी सा
दृष्ट्वा विकसति दयितम्
शुभनिशोत्सवे गतेन तिष्ठति
वधूटिका पितृगेहम् ।
नायके स्पृशति लज्जां मुञ्चति
मोदिता कुलकामिनी
हर्षे विषादम् इह हि सखेदम्
ईक्षे हन्त विधातः ॥

(गीतावसाने)— किं त्वम् एकाकिनी एव तापसजीवनं यापयिष्यसि ?

कपालकुण्डला—कथम् ? कां नाम तपस्यामाचरामि ?

श्यामासुन्दरी—पूरय मम वासनाम् । सकृद् अस्माकं गृहस्थानां कुलललना इव भूषिता भव । कति दिवसानि तापसजीवनं यापयिष्यसि ?

कपालकुण्डला—नासीद् यदा ते सोदरेण सह मम दर्शनं, तदा योगिनी एवाहमासम् ?

श्यामासुन्दरी—सम्प्रति पुनर्न प्रभवसि तापसजीवनयापने ।

कपालकुण्डला—न कथम् ?

श्यामासुन्दरी—स्पर्शमणिं वेत्सि किम् ?

कपालकुण्डला—न हि ?

श्यामासुन्दरी—स्पर्शमणेः स्पर्शेन रङ्गमपि सुवर्णायते ।

कपालकुण्डला—तेन किम् ?

श्यामासुन्दरी—ललनानामपि स्पर्शमणिर्विद्यते ।

कपालकुण्डला—कीदृशः सः ?

श्यामासुन्दरी—पुरुषस्तावत् । पुरुषस्पर्शेन योगिनी अपि गृहिणी भवति । त्वयापि तादृशः स्पर्शमणिः स्पृष्टः । पश्य—(गायति)

संयतचिकुरां परिहितवसनां
कुसुमविभूषितकवराम् ।
अलकभूषणां नितम्बरसनां
श्रुतियुगार्पितकर्णिकाम ॥
ताम्बुलचन्दन- लोहितकुङ्कुम-
रागविरञ्जितवदनाम् ।
धवानुरक्तां स्वजनासक्तां
हास्यमुखीं कुललक्ष्मीम् ॥
स्वर्णविनिन्दित- पुत्तलकोपम-
तनयविशोभितक्रोडाम् ।
पश्यन्ती त्वां संसृतिलिप्तां
ज्ञास्ये तव सुखजातम् ॥

कपालकुण्डला—बुद्धं तावत्, स्पर्शमणेः स्पर्शेन स्वर्णमिव भवेयम् । केशमपि संहरेयम् । सुन्दरवसनमपि परिदध्याम् । कवरीं कुसुमेन

भूषयेयम्। नितम्बे चन्द्रहारमपि योजयेयम्। कर्णे कुण्डलमपि धारयेयम्। ताम्बुलकुङ्कुमचन्दनादिकं व्यवहरेयम्। सुवर्णपुत्तलकमपि लभेय। विचिन्तय सर्वमेव सुसम्पन्नं जातम्। तेन वा किं सुखम्?

श्यामासुन्दरी=प्रसूने प्रकाशिते किं सुखम्?

कपालकुण्डला—दर्शनेन जनानां सुखं, प्रसूनस्य तावत् किम्?

श्यामासुन्दरी—(गम्भीरमुखकान्तिः) कुसुमस्य किं सुखं तत् तु न जानामि। यतो न कदाचिदहं कुसुमाकारेण विकाशिता, परं यदि त्वत्सदृशी कलिकाभविष्यम् तदा विकाशिता सुखम् अन्वभविष्यम्। (कपालकुण्डलां मौनावलम्बिनीं दृष्ट्वा) अथवा तिष्ठतु तावत्—कथय केन प्रकारेण ते सुखं भवति?

कपालकुण्डला—(विचिन्त्य) वक्तुमसमर्था अहम्। मन्ये सागरतीरे वने वने तथा भ्रमणेन मे सुखं भवति।

श्यामासुन्दरी=(विस्मिता दुःखिता रुष्टा च भूत्वा) सम्प्रति पुनर्गमनस्य उपायः कः?

कपालकुण्डला—नास्ति कश्चिदुपायः।

श्यामासुन्दरी—तत् किं करिष्यसि?

कपालकुण्डला—"यथा नियुक्तोऽस्मि तथा करोमि"—इति—तु अधिकारिमुखात् श्रुतं मया।

श्यामासुन्दरी—(वसनेन मुखमाच्छाद्य विहस्य) यथाज्ञापयति आचार्यमहोदयः। अस्य तावत् कोऽर्थः?

कपालकुण्डला—(दीर्घं निःश्वस्य) यद्विधाता कारयिष्यति तदेव करिष्यामि। अदृष्टलिखनं घटिष्यते अवश्यमेव।

श्यामासुन्दरी—अदृष्टे सुखादन्यत् किं विद्यते?

कपालकुण्डला—श्रूयताम्—अपरिज्ञातचारित्रेण स्वामिना अज्ञातदेशगमने मे आशङ्का जाता। अतः शुभाशुभं परिज्ञातुं जगज्जनन्यै अर्घ्यं

दत्तवती। माला विल्वपत्रं न गृहीतम्। तन्न जाने अदृष्टलिखनं किं दर्शयिष्यति इति।

श्यामासुन्दरी—मा अनिमित्तं चिन्तय। सर्वमेव मङ्गलमयं भविष्यति। एहि साधयावः।

( निष्क्रान्ते )

---

## द्वितीयं दृश्यम्

[ सप्तग्रामस्थित-मतिसन्दिरम् ]

( ततः प्रविशति आसनान्तरोपविष्टेन विरक्तिविशेषमनुभवता नवकुमारेण समं तन्निवद्धदृष्टिरासनान्तरसमासीना हिन्दुललनोचितवेशा गीतरता मतिः। )

मतिः—( गायति )—

किमु मयि दयित ! कठोरः ?
चरणनतायाः शरणगताया
नोचित इह परिहारः।
अपरमिवेशं दिल्लिनरेशं
हित्वा तव पदमाप्तम्।
गुणगणसागर ! मा मां परिहर
द्विजो हि करुणासारः॥

( क्रमशः )

---

# योगिभक्तचरितम्

( काव्यम् )

(निबन्धकः—श्रीकाश्यपकविः)

( पूर्वानुवृत्तम् )

## सप्तमः सर्गः

अथान्यदा भक्तगणे पुरःस्थिते स योगिराड् भावविमुग्धमानसः ।
स्वनिर्मितं पद्यचयं व्यघोषयत् नगेन्द्रनाथः प्रियवङ्गभाषया ॥१

यदीयमग्रे सुरभारतीमयं रूपान्तरं संस्कृतवेदिनां प्रियम् ।
निवेद्यते बोधकृतेऽन्यदेशिनां गुणेषु तस्यापि दृशः प्रवृत्तये ॥२

तदेतत् संस्कृतं रूपं विबुधैरवधीयताम् ।
युगाचार्यनगेन्द्रस्य हरिभक्त्यनुवृत्तये ॥३

वसुन्धरेयं धरणी सर्वा शून्यमयी तदा ।
भवन्तं न प्रपश्यामि दयामय हरे यदि ॥४

अन्तरं भवता शून्यं यदि तिष्ठति हे हरे !
रत्नाकरोऽपि न तदा मम रत्नाकरायते ॥५

गन्धवाहोऽपि सततं वहते विषमं विषम् ।
न लभे यदि तत्राहं तव सत्तां जनार्द्दन ॥६

स्वर्गोऽपि सुखनिर्मुक्तो नरकेनैति तुल्यताम् ।
भवतो दर्शनं नाथ ! यदि तत्र न लभ्यते ॥७

अत्युच्चमपि सम्मानं न याचेऽहं कदाचन ।
तेन मानेन चेन्नाथ ! भवामि भवता च्युतः ॥८

लभे यदि धनागारं भवता परिवर्जितः ।
तत् केवलं भवेन्नाथ ! मम चिन्तानिबन्धनम् ॥९

येन ज्ञानेन नाप्नोमि त्वामहं वै कदाचन ।
तदज्ञानं भवति मे तन्मया नैव याच्यते ॥१०
त्वां विना मम संसारे य आनन्दः प्रजायते ।
धिक् तं धिक् तं स आनन्दविरहः प्रतिभाति मे ॥११
त्वत्सत्तया विनिर्मुक्ता या मैत्री नाथ राजते ।
कृपानिधान हे देव ! शात्रवं सा भवत्यलम् ॥१२
त्वां विना हसितामोदौ नूनमुन्मत्तकल्पितौ ।
त्वया विना सुखं यत्तु तत् दुःखस्य निबन्धनम् ॥१३
चन्द्रः सुधाकरः सत्यमिति लोकस्य जल्पना ।
किन्तु तावदसौ चन्द्रो विषस्यैवाकरो भवेत् ॥१४
यदि तत्र न मे नेत्रमिदं पश्यति माधव !
अपूर्वशोभया युक्तं तव वक्त्रसुधाकरम् ॥१५
तदेतत् पद्यमुच्चार्य युगाचार्यः स्वनिर्मितम् ।
चित्रार्पितसमस्तस्थौ भावमग्नश्चिरं ततः ॥१६
अश्रुभिः प्लावितं वक्षः प्रावहत् स्वेदनिर्झरः ।
रोमाञ्चः प्रोद्गतो देहे कम्पश्चाप्यन्तरान्तरा ॥१७
कञ्चित् कालं तथा स्थित्वा श्रीहरेर्नाम वाचयन् ।
समाधिं परिनिर्मुच्य चेतनां वहिराप्तवान् ॥१८
भक्तानामनुरक्तानां पश्यतां श्रीमुखं गुरोः ।
उपदेशं स आचार्यः प्रशस्तं समुदाहरत् ॥१९
भक्ता जगति सर्वत्र भगवद्वैभवं वहु ।
समीक्षन्ते समं सर्वमपि जानन्ति संसृतौ ॥२०
एवं समीक्षमाणानां स्वया बुद्धया निरन्तरम् ।
भावो जागर्ति चित्तेषु भावाद् भक्तेरथोदयः ॥२१
भावभक्तिरिति प्रोक्ता सा भक्तिर्भव्यसाधिका ।
सैव भक्तिर्घनीभूता दधाति प्रेमरूपताम् ॥२२

तदा प्रेमाश्रुकीलालं प्रवहत्यन्तरान्तरा ।
यथा मेघो घनीभूतो जलभावं प्रपद्यते ॥२३
तथैव हृदयाकाशे तापाद् भावे घनायिते ।
तं मनोनायकं स्मृत्वा मनः क्रन्दति तत्कृते ॥२४
चिरमेवं विधानेन वर्तमानस्य चेतसः ।
निःशेषं विनिवर्तन्ते तत्त्वज्ञानमुषो मलाः ॥२५
तदा भक्तौ पराख्यायां या शक्तिः सर्वभासिका ।
तया शरीरभाण्डस्य सर्वं तत्त्वं विबुध्यते ॥२६
पिपासया परिक्लान्तो मुमूर्षुरपि चातकः ।
यथा नाधोमुखो भूत्वा पिबत्यम्भः कदाचन ॥२७
परं पिपासाशान्त्यर्थमुर्द्ध्वं मेघमुदीक्षते ।
तमेव कातरो भूत्वा सलिलं परियाचते ॥२८
स्वशक्तौ परशक्तौ च हित्वा निर्भरमात्मनः।
भगवन्तमुदीक्षन्ते तथा स्वार्थोपलब्धये ॥२९
आदावापणिकाद् वस्तु क्रीयते यदि किञ्चन ।
मानाद् वहिस्तदैवासौ किञ्चिद्दत्ते न चान्यथा ॥३०
क्रेतव्यं वस्तु धर्मो नो भगवानापणाधिपः ।
मानवाह्यं प्रदेयञ्च वस्तु संसारसम्पदः ॥३१
तस्मिन् धर्मे परिक्रीते मानवाह्यमुपायनम् ।
ददात्यापणिको हृष्टो नान्यथेत्यवधीयताम् ॥३२
दिदृक्षमाणया नार्या पुत्राननसुधानिधिम् ।
सहनीया यथा लोके पुत्रप्रसववेदना ॥३३
तथैवेश्वरलाभाय भक्तेन तमभीप्सता ।
भूरि साधनकष्टानि सह्यानि दृढ़चेतसा ॥३४
अन्तर्घुणाक्षतं काष्ठं यथा हि वहिरक्षतम् ।
अन्तर्भगवता दष्टस्तथा स्याद् वहिरन्यथा ॥३५

वेशमात्रेण संसारी भवेन्न मनसापि च ।
वेशमात्रेण सन्न्यासी न भवेत् किन्तु चेतसा ॥३६

भगवत्प्रेमजीमूताद् भगवन्नामवर्षणात् ।
यावदुद्वेलतां प्राप्ता वाति चित्ततरङ्गिणी ॥३७

नेत्रसेतुं समुद्भिद्य तावदश्रु प्रवर्तते ।
दीव्यन्ति सात्त्विका भावाः सत्त्वोद्रेकेण विग्रहे ॥३८

अद्य क्षेममुहूर्त्तेऽस्मिन् दामोदरनदो यथा ।
तथैवोच्छ्वसितात्यर्थमस्मत्स्वान्ततरङ्गिणी ॥३९

भगवन्नामवर्षेण तथोद्वेलास्तु यावता ।
चक्षुःसेतुं समुद्भिद्य प्रवहद्भिरिहाश्रुभिः ॥४०

निःशेषं विलयं यातु दुःखं संसारसम्भवम् ।
सर्वे क्लेशाः प्रणश्यन्तु सर्वं पापञ्च लीयताम् ॥४१

उपदेशं तमास्वाद्य श्रीगुरोरमृतोपमम् ।
कृत्वा गुरुपदद्वन्द्ववन्दनां हृष्टमानसाः ॥४२

आशिषं गुरुणा दत्तामासाद्य सफलायुषः ।
हरिप्रेमप्रमोदेन वाह्या भक्ता गृहं गताः ॥४३

अन्तरङ्गतमाः शिष्या वश्या गुरुगुणैः सदा ।
ध्यानप्रकाशप्रमुखाः क्लान्ता अपि धृतव्रताः ॥४४

परिचर्यां गुरोर्नित्यां कृत्वा मुदितचेतसा ।
मेनिरे गुरुसन्तोषात् सफलां तद्दिनश्रियम् ॥४५

एवं क्रमेण प्रतिवासरं गुरोः क्षेमोपदेशर्मलमुक्तमानसाः ।
प्रमोदधारामपि भूयसीं श्रिताः प्रचक्रिरेऽध्यात्मसमुन्नतिं निजाम् ॥४६

इति श्रीकाश्यपकविविरचिते योगिभक्तचरितकाव्ये
सप्तमः सर्गः समाप्तः

( क्रमशः )

---

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

## श्रीचैतन्यचरितामृते मध्यलीलायां

### द्वितीयः परिच्छेदः

( पूर्वानुवृत्तः )

यथारागः ।

कृष्णप्रेमा कपटरहितः शुद्धजाम्बूनदाभः
प्रायेणायं न भवति नृणां लोकमध्ये कदाचित् ।
संयोगोऽस्य क्वचिदपि यदि स्यात्तदा नो वियोगो
दुर्दैवाच्चेद् भवति विरहो जीवितुं कः समर्थः ॥३१

इत्युक्त्वासौ शचीपुत्रः पपाठ श्लोकमद्भुतम् ।
तत्र शुश्रुवतुस्तं तावेकाग्रमनसावुभौ ॥३२

आत्मनो हृदयावस्थां लज्जमानोऽपि भाषितुम् ।
लज्जाबीजमपि प्राश्य वच्मीत्याह पुनः प्रभुः ॥३३

तथाहि श्रीमहाप्रभुपादोक्तः श्लोकः—

न प्रेमगन्धोऽस्ति दरापि मे हरौ
क्रन्दामि सौभाग्यभरं प्रकाशितुम् ।
वंशीविलास्याननलोकनं विना
विभर्मि यत् प्राणपतङ्गकान् वृथा ॥६॥

यथारागः ।

प्रेम्नः शुद्धस्य गन्धः किमुत सकपटप्रेमबन्धोऽल्पकोऽपि
चित्ते नास्त्येव मेऽसौ पदकमलयुगे येन बध्नामि कृष्णम् ।

क्रन्दाम्येव तथापि प्रतिपलमिति यन्नैव तं प्रेमहेतोः
सौभाग्यं स्वीयमेव प्रथयितुमभितो निश्चितं चेष्टितोऽस्मि ॥३४
यत् संसर्गेण वंशी मदयति हृदयं सोऽपि कृष्णाननेन्दु-
र्न स्यादालम्बनं मे सकृदपि च यतो नैव पश्याम्यहं तम् ।
प्रीतिं देहेन्द्रियादौ सततमनुचरन् स्वोपभोगार्थमेव
कामस्यैव प्रसादं हृदि बहुगणयन् प्राणकीटान् बिभर्मि ॥३५
भागीरथ्या विशुद्धं जलमिव विमलः कृष्णरागोऽमृताब्धि-
रन्यो यातीह रागो न खलु विलयनं शुभ्रवस्त्रे मसीवत् ।
शुद्धप्रेम्नः सुखाब्धेरणुरपि जगतां मज्जनं कर्त्तुमीष्टे
वक्तुं योग्यं नचैतत्तदपि वदति यद्वातुलः कः प्रतीयात् ॥३६
इत्येवमात्मनो भावान् विचित्रान् श्रीमहाप्रभुः ।
रामानन्दस्वरूपाभ्यां प्रत्यहं समवेदयत् ॥३७
वहिरेव विषज्वालां सोऽन्तश्चानन्दमन्वभूत् ।
अद्भुतं चरितं कृष्णप्रेम्नस्तेन प्रकाशितम् ॥३८
मुखदाहेऽपि न त्याज्यं तप्तेक्षोश्चर्वणं यथा ।
अस्य प्रेम्नस्तथास्वादः प्रदहन्नपि दुस्त्यजः ॥३९
प्रेमायं युगपद् योगो गरलामृतयोरिव ।
हृदि यस्यास्ति तेनैव ज्ञायते तस्य विक्रमः ॥४०

तथाहि विदग्धमाधवे द्वितीयाङ्केष्टादशश्लोके नान्दीमुखीं प्रति पौर्णमासी-वाक्यम्—

पीडाभिर्नवकालकूटकटुता-गर्वस्य निर्वासनो
निःस्यन्देन मुदां सुधामधुरिमाहङ्कारसङ्कोचनः ।
प्रेमा सुन्दरि, नन्दनन्दनपरो जागर्त्ति यस्यान्तरे
ज्ञायन्ते स्फुटमस्य वक्रमधुरास्तेनैव विक्रान्तयः ॥७॥

( क्रमशः )

# छन्दोगप्रक्रिया

[निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः]

( पूर्वानुवृत्ता )

विरूपाक्षजपान्तां सामान्यकुशण्डिकां समाप्य विवाहकर्माभिधीयते।[1] तत्र प्रथमं ज्ञातिकर्म[2] यथा,—मातापित्रोरन्ये सुहृदः जलेनार्द्रीकृतैर्यवचूर्णैर्माषचूर्णैर्वा आप्लुतसर्वशरीरां कन्यां शोभनगन्धादियुक्तेन वारिणा त्रिर्मूर्द्धन्यभिषिञ्चेयुः—(१म) प्रजापतिर्ऋषिः प्रस्तारपङ्क्तिश्छन्दः कामो देवता ज्ञातिकर्मणि कन्यायाः शरीरप्लावने विनियोगः ॐकाम वेद ते नाम मदो नामासि समानयामुं सुरा ते अभवत्। परमत्र जन्माग्ने तपसो निर्मितोऽसि स्वाहा। अमुमिति सर्वनामस्थाने द्वितीयान्तं भविष्यतः पत्युर्नाम गृह्णीयुः। (२य) ॐ इमन्त उपस्थं मधुना संसृजामि प्रजापतेर्मुखमेतद् द्वितीयम्। तेन पुंसोऽभिभवासि सर्वानवशान् वशिन्यसि राज्ञी स्वाहा।[3] अस्य द्वितीयमन्त्रस्य मध्ये ज्योतिर्जगतीच्छन्दउपस्थरूपकामोदेवता उपस्थप्लावने विनियोगः। (३य) ॐ

(१) पुण्ये नक्षत्रे दारान् कुर्वीत। इति गोभिलः २।१।१ उदगयने पूर्वपक्षे पुण्येऽहनि गृह्योक्तकर्मणां सिद्धत्वेऽपि दारकर्मणि तिथिप्रभृत्यपेक्षया नक्षत्रस्यादरातिशयार्थमिदं बोद्धव्यम्।

(२) "क्लीतकैर्यवैर्माषैर्वाऽऽप्लुतां सुहृत्सुरोत्तमेन सशरीरां त्रिर्मूर्द्धन्यभिषिञ्चेत्—काम वेद ते नाम मदोनामासीति समानयामुमिति पतिनाम गृह्णीयात् स्वाहाकारान्ताभिरुपस्थमुत्तराभ्यां प्लावयेत्" इति गोभिलः १ये।१प्र।१ख। वरुणासुराऽरविन्दानीत्युदकनामसु नैघण्टुके काण्डे पाठात् उदकनामैतद् यत्सुरेति। तथाच गृह्यासंग्रहः—

सर्वयज्ञेषु विप्राणामद्भिः पूर्वं प्रवर्त्तते।
तस्मात् सुरोत्तमा ह्यापो अद्भिरेवाभिषेचयेत्" इति
दौर्भाग्याद्युपशमनार्थमिदं ज्ञातिकर्मावश्यं कर्तव्यम्।

( क्रमशः )

# कर्मणः स्वरूपप्रयोजने

[ निबन्धकः—श्रीदीननाथतर्कवेदान्ततीर्थः ]

येन संसारचक्रमनिशं प्रवर्तते सुरनरतिर्यग्भेदभिन्नतया तत् खलु कर्म। कर्म, क्रिया, व्यापार इत्यनर्थान्तरम्। व्यापारे कर्मशब्दस्य रूढत्वम्। यदाहुर्वाचस्पतिमिश्राः 'अत्र च कर्मशब्दस्तावद् व्यापारे निरूढवृत्तिः, कार्ये तु क्रियत इति व्युत्पत्त्या वर्तते [ ब्र: सू: जा: १।४।१६ ]। 'एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणमि'ति वैशेषिकसूत्रे स्पन्दस्य क्रियात्वं सूचितम्। प्रशस्त-पादाचार्यैरपि उत्क्षेपणादीनां पञ्चानां कर्मणां साधर्म्यप्रतिपादनावसरे 'संयोगविभागनिरपेक्षकारणत्वमि'ति व्यापारस्य कर्मत्वं साधितम्। उदयनाचार्यैरपि यागदानहिंसादीनां कर्मत्वमुक्तम्। "भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत, एष ह्यर्थो विधीयते" [ मा: सू: २।१।१ ] इति जैमिनिसूत्रेऽपि सर्वधात्वर्थानुगतकरोत्यर्थरूपायाः सामान्यक्रियात्वं तथा तत्तद्धात्वर्थानुरक्तभावनाया विशेषकर्मत्वं प्रतिपित्सितम्। वार्तिककारा अप्येवमाहुस्तत्र। 'यदौदासीन्यप्रच्युतिमात्रेण परिस्पन्दरूपं निरूप्यते सा भावना, ये तु तदनुरञ्जनसमर्थाः कर्तृकर्मगता विशेषास्ते तस्या एव करोतिकर्तव्यतांशयोर्निविशन्ते" इति परिस्पन्दापरनामव्यापारस्य कर्मत्वं मीमांसकमतेऽपि तुल्यमेव। वैयाकरणैस्तु क्रियावाचकानां गणपठितानां धातुत्वं स्वीकुर्वाणैरपि व्यापारस्य क्रियात्वमभिधीयते। अस्त्यादावपि सत्तारूपफलानुकूला भावना प्रतीयते। एतदुक्तं भूषणकारैः 'अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना'। आसन्नविनाशं पुरुषमुद्दिश्य किं करोतीति प्रश्ने ऽ'स्ती'त्युत्तरस्य सर्वसम्मतत्वात्। नयायिकास्तु भवनावस्थानादीनां धात्वर्थत्वमङ्गीकृत्यापि कर्मत्वं प्रति विप्रतिपद्यन्ते। भाट्टा अपि ज्ञानादीनां धात्वर्थरूपक्रियात्वविषये सम्प्रतिपन्ना व्यापारात्मककर्मत्वं सङ्गिरन्ते। यदुक्तं नारायणभट्टैः "अविभुद्रव्यमात्रस्थं प्रत्यक्षं चलनात्मकं। वियोगयोगयोर्मूलं कर्म कर्मविदो विदु"रिति।

शाङ्करे तु दर्शने क्रियायाः कृतिव्याप्यत्वात् ज्ञानेच्छादीनां तदभाववत्त्वेन क्रियात्वप्रत्ययव्यपदेशभाक्त्वं नास्ति। तस्मात्तत्समये अपि व्यापारस्यैव कर्मत्वम्। अत एव भगवत्पादैः श्रुतिसूत्र(स्मृति)भाष्ये बहुशो ज्ञानस्य वस्तुतन्त्रत्वं सगुणोपासनायाः कर्तृतन्त्रत्वेन मानसक्रियात्वं प्रतिपादितम्। तस्माद्व्यापारस्य कर्मत्वं सर्वसम्मतम्।

धर्मार्थकाममोक्षात्मकचतुर्वर्गप्रतिपत्तिस्तस्य प्रयोजनम्। इष्टानिष्टप्राप्तिपरिहारयोरीश्वरेच्छाकालकर्मदैवादीनां निमित्तत्वाविशेषेऽपि कर्मणः प्राधान्यमकामेनाप्यभ्युपगन्तव्यम्। श्रुतिस्मृतिभ्यां सहस्रश एतत् प्रतिपादितम्। "तौ ह यदूचतुः कर्म हैव तदूचतुरथ यत् प्रशशंसतुः कर्म हैव तत् प्रशशंसतुः" [ बृः उः ३।२।१३ ]। 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' [गी ३।५] "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" [ गी ३।२० ] इत्यादि। तच्च कर्म द्विविधम्। दृष्टफलकमदृष्टफलकञ्चेति। दृष्टफलकमपि द्विधाऽव्यवहितफलकं व्यवहितफलकञ्च। तत्राव्यवहितफलकं स्वाश्रयक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वविशिष्टस्वाश्रयक्षणध्वंसाधिकरणक्षणवृत्तिस्वविशिष्टफलजनकत्वम्। तेन विभागादिकारणीभूते कर्मणि नाव्याप्तिर्नातिव्याप्तिश्च कृष्यादौ। व्यवहितफलकत्वञ्च स्वावच्छिन्नकालप्रागवृत्तित्वविशिष्टस्वावच्छिन्नकालध्वंसाधिकरणक्षणध्वंसाधिकरणकालवृत्तिस्वविशिष्टफलजनकत्वम्। फले स्ववैशिष्ट्यञ्चोभयत्रोत्तरकालवृत्तित्वसम्बन्धेन।

अव्यवहितफलकं भोजनगमनादि, व्यवहितफलकं कृष्यादि, चित्रादि। अदृष्टफलकन्तु ज्योतिष्टोमादि।

( क्रमशः )

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharys—Edited by Pt. Bamacharan Kvyatirtha. As. 12 ; As. 10. (for membera).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. Re. 1-8 ; Re, 1-4 ( for members ).

14. **Nala-damayantiyam** ( a new Drama ) of MM, Kalipada Tarkacharya. Rs. 1-8 ; Rs. 2 ( for members ).

15. **Prashastapada-bhashyam**—Edited by MM, Kalipada Tarkacharya, Rs. 4 ; Rs. 3. ( for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2 ; Re. 1-8 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr, Pashupatinath Shastri M. A,, B. L., Ph. D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs 5 ; Rs. 4 (( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed, by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; 6 ( for members).

21 **Manodutam** of Vishnudasa—Ed. by prof. Chintaharana Chakravarti, M. A. Re. 1-4 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs, 2 ; Re. 1-8 ( for members).

23. **Devisatakam** of Mahmahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., As. 8.

25. **Satyanubhavam** ( a new Mahakavya ) of MM, Kali pada Tarkacharya, Rs. 5 ; Rs. 4-8 ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re. 1-8 ; Re. 1-4 ( for members ).

---

## अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनस्य

# आवेदनम्

अखिलभारतसम्मानिता संस्कृतभाषा यथा भारतराष्ट्रस्य राजभाषात्वेन परिगणिता स्यात् तदर्थं १९५८ खृष्टाब्दीये मे-मासे युगाचार्य-श्रीश्रीसीताराम-दासोङ्कारनाथचरणानां प्रधानाध्यक्षत्वेण कलिकातामहानगर्यामेकमखिलभारतीय-संस्कृतराष्ट्रभाषासम्मेलनमनुष्ठितम्। तत्र तदीयोद्देश्यसाधनाय काचित् साधारणपरिषत् काचित् कार्यनिर्वाहकपरिषच्च सुसंघटिते। तत्र तत्र सर्वेषां भारतहितैषिणां यथासम्भवं सदस्यपदाधिकारेण सर्वथा साहायकविनियोगः सम्प्रार्थ्यते।

तत्र साधारणसदस्यपदाधिकाराय प्रतिवर्षमेकं रूप्यकं कार्यनिर्वाहकसदस्य-पदाधिकाराय च रूप्यकत्रयं सम्पादकसविधे दातव्यम्।

विनीत—

स्थानसङ्केत :— श्रीनिर्मलचन्द्रदासगुप्त-

३नं शम्भुनाथपण्डित ष्ट्रीट् श्रीनगेन्द्रनारायणचतुर्धुरीणयोः

कलिकाता-२० सम्पादकयोः

### तत्र विशिष्टकर्माध्यक्षा :—

पूज्यपाद—श्रीश्रीसीतारामदासोङ्कारनाथमहाराजः ( सभापतिः )

डाः—श्रीनलिनीरञ्जनसेनगुप्त एम-डि महोदयः ( कार्यनिर्वाहकसभापतिः )

विचारपति—श्रीरमाप्रसादमुखोपाध्याय एम् ए. वि-एल् ( पृष्ठपोषकः )

श्रीश्रीजीवन्यायतीर्थ—श्रीचपलाकान्तभट्टाचार्य एम्-ए—श्रीवसन्तकुमार-चट्टोपाध्याय एम्-ए प्रमुखाः ( सहसभापतयः )। सम्पादकौ च।

Reg. No. C 1073

Vol. XXXXI. No. 4 ४१श-वर्षस्य ४र्थ-संख्या

August 1958 १८८० शकीये श्रावणे मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री-काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—1-4d

# Sanskrit Sahitya Parishat Series

( Revised up to December, 1957 )

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chandra Siddhantabhushana. Re. 1-4; *R*e. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan. Bhattacharya. (Out of stoek.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacbarya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Re. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. (*f*or members). Rs. 2. 8 ; Rs. 2.

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8. Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri- As. 4.

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Sbastri, M. A', B. L. Ph, D. Re. 1-8 ; Re. 1-4. ( for members ).

10. **Grahayaga-tattvam** of Raghunandana Bhaṭtacharya—Edited b*y* Pt. Satish Chandra Siddhantabhushana. As, 14 ; As. 10 (for members). ( Cont. to. Cover 3rd Page )

---

Printed by Bishnupada Bhattacharya M. A. Kavyatirtha. at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghosc Lane, Calcutta and published by the same form Sanskrit Sahitya parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta-4.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा-रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

| | | |
|---|---|---|
| Vol. XXXXI. No. 4 | १८८०-शकीये श्रावणे ४१श-वर्षस्य ४र्थ-संख्या | August 1958. |

## मतिमञ्जरी

### स्वाधीनता-स्मृतिः

निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः

इतः खाद्याभावः, इतो वस्त्राभावः, इतोऽतिवृष्टिः, इतोऽनावृष्टिरितो जलोच्छ्वासेन लोकक्षय, इतो वात्याचक्रेण जनपदध्वंस, इतो व्योमयानदुर्घटना, क्व वा वाष्पीयशकटसङ्कटः, क्व चावश्यकद्रव्यमूल्यवृद्धिः, क्व वा कर्मिकर्मविरतिरितश्च विद्यार्थिनां शिक्षकाणाश्चासन्तोषविज्ञप्तिरितो रणहुङ्कारः, क्व च परराष्ट्र-सीमालङ्घनं, किमधिकं शान्तिशरणेषु शरणेषु विवाहविच्छेदो, दम्पत्योरप्यविश्वास आत्महत्याऽसन्तुष्टिरित्येवं शतशः सकलविघटनशकलसङ्कटसमाकुले स्वराष्ट्रेऽद्यत्वे समुद्याप्यते वार्षिकमहोत्सव एकादशवर्षीयः। विश्रृङ्खलावीथयः पाशवद् राष्ट्रस्यैतस्य भरतशासितस्य कण्ठदेशं चूर्णपेषं पिनष्टि,—नालङ्कुर्वन्ति मालेवाभ्यु-दयमालाः ।

अद्य खलु स्मृतिपथं समुद्भासयति महात्मनः प्रथमासहयोगान्दोल-नम् । तदानीं नासन् वामपथपथिका, नासन् दक्षिणपथपथिका वा ।

सर्व एवैकमत्येन जन्मभूमेः स्वाधीनतार्जनाय समुद्युक्ताः, केवलं समधिका राजकर्मकराः किङ्कराः प्रातिकूल्येनातिष्ठन्। येन केनाप्युपदिष्टं मातृभूमिमङ्गल-विधायकं कर्म सर्वैः सादरमनुष्ठीयते स्म। राष्ट्रमिदं रत्नोपमैर्नेतृस्थानीयैरद्यापि समृद्धम्। सम्भूय कृत्यसम्पादनाय प्रवृत्तेषु तेषु कलङ्को नूनमपयास्यतीत्यस्माकं मतम्। सकृदेव पूर्ववृत्तं समालोच्यताम्। ये नागरिकाः शिक्षिताशिक्षित-धनिदरिद्रनिर्विशेषेण प्राग् वैदेशिकानां शासकानां शासनावसानाय प्रायतन्त ते सर्वे न लोकान्तरं प्रस्थिताः, केवलं वैमत्यमस्मान् पीडयति दुर्दशाग्रस्तांश्च कुरुते। केनोपायेन स्वदेशमर्यादारक्षणाय वयं प्रभवामस्तदुपायश्चिन्तनीयः स्वाधीनताया उत्सवपालनावसरे। ऋणग्रस्तं राष्ट्रं वैदेशिकान् निकषा, प्रतिवेशिना खण्डीकृतमपि राष्ट्रं सीमविवादमुपलक्षीकृत्याद्यापि प्रतिवेशिना तेनैव नितरां पीड्यते। आपदपि दैवी भौतिकी च भाग्यदोषात् समुपागता। जनगणमानसानि नितरां विक्षिप्तानि। स्वाधीनचिन्तया समुन्नतेर्वार्ता दूरे आस्तां,—सत्यं जीवनसंग्रामे प्रवृत्ताः समधिकसंख्यका नागरिकाः प्रतिदिनं दुःखगणनया कालं नयन्ति। एवं विसंष्ठुले समये किं स्वेष्टचिन्तनावसरमपि न प्राप्स्यन्ति निरुपद्रवाः सज्जनाः? ते न कामयन्ते प्रासादं,—न कनक-माणिक्यादिकं,—न वाजिगजभूम्यादिकं, केवलं निरुपद्रवेण ग्रासाच्छादने लब्धुमीहन्ते। अप्यस्माकं मातृभूमिस्तत्प्रदानेऽसमर्था? नैतदनुमन्तुमुत्सहा-महे। केवलं प्रार्थ्यते,—ये महान्तः सचेतसो वर्तन्ते मातृक्रोडे,—ते मिलित्वा वैमत्यं विहाय कार्यैक्यसाधनाय प्रवर्तन्ताम्;—तेनैवास्माकं मातृभूः समुन्नततरा भविष्यति। अपि चात्र भरतराज्ये भरतवत् शास्त्रमर्यादां यथातथं प्रदाय विमलविवेकधारया सञ्जातं दौर्बल्यकलङ्कं विधौतं कृत्वा निरपेक्षं विचार्यतां, तेनैव मातृभूमिः शान्तिं लप्स्यते,—तत्क्रोडाश्रितास्तनया अपि निरुद्वेगं शान्तिं सुखञ्च लप्स्यन्ते इति स्वाधीनतादिवसेऽस्माभिः प्रज्ञा ग्रहीतव्या। एवं विवेकपूर्वकं कर्मारम्भे सर्वं सुसमञ्जसं भवितेति स्मर्तव्यं मन्तव्यमाचरितव्यञ्च तदनुसारेणेति प्रबोध्य श्रीश्रीभगवतः समीपे सर्वेषां कल्याणं संप्रार्थ्यते।

---

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

## श्रीचैतन्यचरितामृते मध्यलीलायां

### द्वितीयः परिच्छेदः

( पूर्वानुवृत्तः )

यदा सुभद्रा बलरामयुक्तं श्रीमज्जगन्नाथमहं निरीक्षे ।
तदा कुरुक्षेत्रमुपागतं स्वं सङ्कल्पितात्मा किल भावयामि ॥४१
जानामि दृष्टः खलु पद्मलोचनः साफल्यमाप्तं मम सर्वजीवनम् ।
कलेवरं नेत्रयुगं मनश्च मेऽलभन्त तृप्तिं निखिलोत्तमां क्षणात् ॥४२
निकषा गरुडस्तम्भं स्थित्वापश्यन्महाप्रभुः ।
यमानन्दं तदा लेभे न निर्वाच्यं हि तद्बलम् ॥४३
गरुडस्तम्भमूलस्थो निम्नगर्त्तोऽश्रुभिर्भृतः ।
गृहागतेन तेनाथ लिखिता च नखेन भूः ॥४४
हा हा वृन्दावनं कुत्र क्व वा गोपालनन्दनः ।
स वंशीवदनः क्वास्ते क्वासौ त्रिभङ्गविग्रहः ॥४५
कुत्र तन्मुरलीगानं क्व चासौ यमुनातटः ।
क्वास्ते रासविलासोऽसौ हासो गीतञ्च नर्तनम् ॥४६
ममासौ वर्तते कुत्र प्रभुर्मदनमोहनः ।
इत्येवं विविधैर्भावावेगैर्द्रुतसमुत्थितैः ॥४७
समुद्विग्नमना जातस्तदानीं स महाप्रभुः ।
कालं मुहूर्तमात्रञ्च नासीद् यापयितुं क्षमः ॥४८
धैर्यं तरलतामाप्तं महाविच्छेदवह्निना ।
ततो नानाविधान् श्लोकान् पठितुं स प्रचक्रमे ॥४९

"तथाहि श्रीकृष्णकर्णामृते चत्वारिंशश्लोके विल्वमङ्गलवाक्यम् ;—

अमूल्यधन्यानि दिनान्तराणि हरे त्वदालोकनमन्तरेण ।
अनाथबन्धो करुणैकसिन्धो हा हन्त हा हन्त कथं नयामि ॥८
रात्रिन्दिवं सर्वमधन्यमेव मे कालो न नेयस्तव दर्शनं विना ।
दया महाब्धिस्त्वमनाथबान्धवः प्रदेहि मह्यं तव दर्शनं प्रभो ॥५०

इतीत्थं भावचापल्यांचलच्चित्तोऽभवत् प्रभुः ।
कोऽपि बोद्धुं न शक्तोऽभूद् भावानां तादृशीं गतिम् ॥५१
अदर्शनेन दग्धात्मा दर्शनं ते कथं लभे ।
इत्युपायमपृच्छत् स कृष्णमेव महाप्रभुः ॥५२

"तथाहि तत्रैव द्वात्रिंशश्लोकः ;—

त्वच्छैशवं त्रिभुवनाद्भुतमित्यवेहि
मच्चापलञ्च तव वा मम वाधिगम्यम् ।
तत् किं करोमि विरलं मुरलीविलासिन्
मुग्धं मुखाम्बुजमुदीक्षितुमीक्षणाभ्याम् ॥९

यथा रागः ।"

माधुर्यस्य बलं हि यत्तव ममाप्यत्रैव यच्चापलं
त्वञ्चाहञ्च परस्परं तदुभयं जानीवहे निश्चितम् ।
किं किं वा विदधे क्व यामि शरणं गत्वा क्व वा त्वां लभे
तत् सर्वं कृपया स्वयं निदिश मां नान्योऽस्ति मे त्वादृशः ॥६३

इत्येवं बहुभावानां प्राबल्यमभवत् प्रभोः ।
अभूतां सन्धिशावल्ये भावानामभवद्रणः ॥५४
औत्सुक्यं चापलं दैन्यं रोषामर्षादयोऽभवन् ।
संग्रामे सैनिकास्ते ते प्रेमोन्मादस्य हेतवः ॥५५

( क्रमशः )

---

# योगिभक्तचरितम्

( काव्यम् )

(निबन्धकः—श्रीकाश्यपकविः)

( पूर्वानुवृत्तम् )

## अष्टमः सर्गः

सुगममधुरवाचा नीतिपूर्णोपदेशान्
प्रवितरति निकामं श्रीनगेन्द्रे स्वभक्ते ।
अभिमततमधर्मस्थैर्यमुद्वीक्ष्य देवः
समभवदतिमात्रं प्रीतिमान् वासुदेवः ॥१

निजनियममहिम्ना भक्तियोगस्य धाम्ना
सुकृतिचरणवश्यो वासुदेवस्तदीयाम् ।
समजनयदमेयां प्रोज्ज्वलाध्यात्मशक्तिं
बहुविधविधिसिद्धिं यत्प्रभावात् स चक्रे ॥२

कृतापराधं निजभक्तबान्धवं प्रसह्य कारागृहवर्तनोन्मुखम् ।
भक्तानुगत्या सममोचयत् क्वचिद् यया जयेन व्यवहारकर्मणि ॥३

कदापि वाणिज्यविधौ विषीदतो यथा समादिश्य महोन्नतिं पराम् ।
सुकोमलान्तःकरणेन हर्षणीं प्रकाशयामास विभूतिमात्मनः ॥४

कदापि चौरेण हृतं निजं जनं वस्त्वन्तरं वा प्रियभक्तदेहिनाम् ।
प्रापय्य दृष्ट्वेव दृशा सुदिव्यया स विस्मयं तत्र नृणामजीजनत् ॥५

तथा विभूतिः परितः प्रचारिता जनानकर्षत् प्रतिवासरं ततः ।
ममौ न तस्मिन् निलये जनावली प्रवर्द्धमाना परमुत्तरोत्तरम् ॥६

तदालयं तेन विहाय तत्परं गृहान्तराणि क्रमशः समाश्रयत् ।
स योगिराजो युगधर्ममर्मवित् स्वभक्तवर्गैः सहितो हितव्रतः ॥६

स तत्र तत्रातिविशालमन्दिरे यथाभिलाषं समवर्त्तयत् क्रियाम् ।
शिष्योपदेशः किल तस्य पूर्ववद् गतप्रसारो जगतो हितं व्यधात् ॥८
यथा समासाद्य सरोजसौरभं क्रमेण विन्दन्ति सरो मधुव्रताः ।
तथैव तत्रापि तदीयवैभवं प्रतीत्य नित्यं मिलिता जनावली ॥९
महोत्सवाः पूर्ववदेव तेष्वपि प्रवर्त्तमाना बभुरन्तरान्तरा ।
तथैव च श्रीगुरुपूर्णिमादिषु दरिद्रनारायणसेवनाद्यभूत् ॥१०
विज्ञाय तद्वभवमिष्टसिद्धयः श्रद्धानुविद्धाः परमन्तरान्तरा ।
तद्दर्शनार्थं समुपेत्य तद्गृहं सन्तः सुदूरादपि तोषमन्वगुः ॥११
ते योगिराजेन समं यदा यदा समेत्य संवादमकुर्वतादरात् ।
तदा तदा तेषु चितं चिरन्तनं स्थिरोदयं मैत्रमिव व्यभाव्यत ॥१२
तदा तदाध्यात्मिकतत्त्ववार्त्तया प्रवर्त्तितश्चेतसि विस्मयो नृणाम् ।
तैस्तैश्च सद्भिर्यतिभिः कृतादरात् तदीयमाहात्म्यमबोधि मानवैः ॥१३
कदाचिदेको यतिराप तद्गृहं स शिष्यमुख्यैः सुतरां समादृतः ।
नीतो गुरोः सन्निधिमाचरत्तथा यथा स पूर्वः सुहृदावभौ नृणाम् ॥१४
महर्षिवादेन स तेन मानितः श्रीयोगिराजो यतिना प्रहृष्यता ।
मैत्रात् पुराणादिव तौ परस्परं प्रकाममालिङ्गनकर्म चक्रतुः ॥१५
पुराणमित्रोपगमादिवास्रवत् प्रमोदवाष्पाम्बु विलोचनात्तयोः ।
मिथः परिष्वङ्गविमुक्तविग्रहौ ततस्तु तावासनमर्हमापतुः ॥१६
पश्यत्सु भक्तेषु दशानुषक्तया सविस्मयं भावमलौकिकं तयोः ।
प्रवृत्तिमाप्ता मधुरा परस्परं प्रमोदसंवादमयी सरस्वती ॥१७
कथान्तरे हास्यमभूत्तदास्ययोः क्वचिच्च गाम्भीर्यमदीपि चिन्तया ।
क्वचित् परेशाश्रयवाङ्मयोदयात् भक्तयश्रु सुस्राव विलोचनद्वयात् ॥१८
तद्भावसन्दर्शनजातविस्मयो ध्यानप्रकाशो गुरुभक्तकुञ्जरः ।
सञ्चिन्तयामास तदा निजान्तरे क एष सन्न्यासिवरः समागतः ? ॥१९
कदा नु वा श्रीगुरुणा समं शमी सुसङ्गतोऽयं यतिमण्डलेश्वरः ।
न वीक्षितोऽस्माभिरयं कदाचन यज्ज्योतिषा दीप्तमिदं गृहान्तरम् ॥२०

शीर्षे जटा गैरिकरागि वस्त्रं दृष्टिः प्रसन्ना महतोऽनुरूपा ।
ज्योतिः सहस्रांशुसमं सुदीप्रं सर्वाणि माहात्म्यमुदीरयन्ति ॥२१
अध्यात्मतत्त्वप्रचयानुविद्धा वदन्ति वाचोऽस्य हि तत्त्वविद्याम् ।
गुरुप्रभावो जयति प्रकामं महाजनो येन तथाद्य दृष्टः ॥२२
नेत्रे कृतार्थे यदयं समीक्षितः श्रोत्रं तथा तद्वचनोच्चयश्रुतेः ।
प्रभूतभाग्येन समागमः सतां तनोति सौभाग्यमलं वपुष्मताम् ॥२३
यतिं तमाश्रित्य तदर्थजाते ध्यानप्रकाशेन विचिन्त्यमाने ।
उद्दिश्य तं प्राह यतिः प्रसन्नो वचःसुधां तस्य यतेः पिबन्तम् ॥२४
ध्यानप्रकाश ! प्रथमोऽसि शिष्यो नगेन्द्रनाथस्य महामहिम्नः ।
त्वं ब्रह्मचर्येण चिरस्थिरेण योगादिभिश्चापि गतो विभूतिम् ॥२५
गुरुस्तवायं स्थितिमान् महर्षिः परेश्वरप्रेरणयाप भूमिम् ।
धर्मस्य भव्याय सनातनस्य धर्मान्तरेणानुदिशं हतस्य ॥२६
विद्याविवृद्धश्चरिते विशुद्धः प्रसिद्धिमान् पुण्यकथाप्रसङ्गैः ।
योगादिसिद्धो यदयं प्रदृष्टस्तन्मे महाभाग्यफलं हि मन्ये ॥२७
शिष्या भवन्तो बहुभाग्ययुक्ता यदस्य पादौ परिपूजयन्तः ।
अस्योपदेशामृतपानतृप्ताः कुर्वन्ति जातिं सफलां स्वकीयाम् ॥२८
यदृच्छया यत्र पतत्यमुष्य श्रीपादपङ्केरुहरेणुलेशः ।
पदं तदेतद् सुतरां पवित्रं ध्रुवं महातीर्थगुणं वृणीते ॥२९
महर्षिणानेन विकीर्णतत्त्वः सनातनो धर्मनयः प्रशस्तिम् ।
संयाति संयास्यति चाग्रतोऽपि परेश्वरः कामयते यदेतत् ॥३०
यथा यथा धर्मनयं महात्मा दिशत्ययं कार्यतया गुरुर्वः ।
तथा तथा तं चरतानुवेलं लोके प्रचारञ्च कुरुध्वमस्य ॥३१
विद्याकृता वंशपरम्परेत्थं न च्छेदमायाति भवे गुरूणाम् ।
नृणां यथा वंशधराः सुताद्याः तथैव शिष्यप्रमुखा गुरूणाम् ॥३२
शिष्या हि ये नीतिमिमां स्मरन्तः कुर्वन्ति कर्माणि विशुद्धभावाः ।
त एव लोके गुरुकर्मयोगाद् यशस्विनः पुण्यभृतो भवन्ति ॥३३

ये तद्विरुद्धे पथि वर्त्तमानाः सदा सतां लिङ्गभृतश्चरन्ति ।
परिच्युतास्ते किल पुण्यमार्गादन्ते महत् कष्टमुपाश्रयन्ति ॥३४

विश्वासमाधेहि गुरौ प्रकामं श्रद्धा गुरौ शिष्यगुणो महीयान् ।
गुणः स सर्वा विपदो निहन्ति सम्पत्प्रतानञ्च करोति नित्यम् ॥३५

तुष्टे गुरौ सर्वसुराः प्रतुष्टा रुष्टे च तस्मिन्नतिमात्ररुष्टाः ।
मूर्त्तिः सुराणां हि गुरुः समेषां तस्माद् गुरुं तोषयितुं यतेथाः ॥३६

स हन्त्यविद्यातिमिरं दयालुः प्रभाकरो ज्ञानकरार्पणेन ।
ऋणानि कः शोधयितुं समर्थस्तस्याधमर्णो बहुकोटियत्नैः ॥३७

स्मरोपमन्युं स्मर वेदसंज्ञं तथारुणिं धौम्यगुरोः सुशिष्यम् ।
सन्तोष्य ते स्वीयगुरुं महान्तं महान्तमेवोदयमाप्तवन्तः ॥३८

सर्वेश्वरो वृष्णिकुले प्रसूतः कृष्णोऽपि सन्तोषयितुं गुरुं स्वम् ।
तदीयपुत्रस्य चिरान्मृतस्य प्राणप्रदानादकरोदपूर्वम् ॥३९

एवं गुरोर्मानविधिः प्रसिद्धः सुपर्वगन्धर्वनरादिकेषु ।
स नातिलङ्घ्यो भुवि भव्यकामैः सर्वार्थसिद्धिप्रतिभूः स लोके ॥४०

हितोपदेशं तमिमं ददाने यतिप्रधाने महतादरेण ।
नगेन्द्रजेतापि नगेन्द्रनाथो भावेन मुग्धो ददृशे विसंज्ञः ॥४१

कलेवरे तस्य तदा बहूनि चिह्नानि भावस्य दधुः प्रकाशम् ।
भावेन तेनासकृदीक्षितेन ध्यानप्रकाशो नहि विस्मितोऽभूत् ॥४२

तस्य प्रतीकारकृते तदानीं शिष्याः प्रचक्रुर्हरिनामगानम् ।
ततः कियत्कालमतीत्य संज्ञां हरिं स्मरन्नाप गुरुर्नगेन्द्रः ॥४३

अथातिथेः सत्कृतिलाघवं स सम्भाव्य लज्जामिव सम्प्रपन्नः ।
क्षमां ययाचे विनयेन जुष्टः सतां स्थितिं शिष्टगणाः स्मरन्ति ॥४४

समादरेणाह यतिस्ततस्तं लज्जे तवेदृग्विनयान्महर्षे !
धन्योऽस्मि यत्तावकभावमेवं भाग्यादपश्यं कृतमार्त्तिभिस्ते ॥४५

( क्रमशः )

---

# कपालकुण्डला-रूपकम्

## चतुर्थोऽङ्कः

### द्वितीयं दृश्यम्

[ सप्तग्रामस्थित-मतिमन्दिरम् ]

( पूर्वानुवृत्तम् )

नवकुमारः—(गीतावसाने आसनादुत्थाय) साम्प्रतं गन्तुमिच्छामि। मा पुनर्मामाह्वय।

मतिः—(व्याकुला मतिरासनादुत्थाय नवकुमारस्य वस्त्राञ्चलं गृहीत्वा सानुनयम्) मा गच्छ। किञ्चिदपेक्षस्व। श्रूयतां मे वचनशेषः।

नवकुमारः—कथ्यताम्।

मतिः—किं त्वमभिलषसि? जगति किं तव प्रार्थनीयं न किमपि विद्यते? प्रतिदानमनपेक्ष्य धनमानप्रणयकौतुकादीनि यानि यानि पार्थिवसुखानि विद्यन्ते तानि सर्वाण्येव तुभ्यं दास्यामि। केवलं ते दासी भवितुमिच्छामि। नाहं याचे तव पत्नीत्वगौरवम्। केवलं दासीत्वमेव याचे।

नवकुमारः—दरिद्रो ब्राह्मणोऽहम्। इह जन्मनि दरिद्र एव स्थास्यामि। धनलोभात् नाहमिच्छामि यवनीवल्लभत्वम्। ( मतेर्हस्तात् नवकुमारः स्ववसनाञ्चलं मोचयति )।

मतिः—भवतु एवं तावत्। यदि विधातुरेषैवेच्छा प्रबला तदा नाहमपरं किमपि याचे। ( नवकुमारस्य हस्तं धृत्वा ) केवलमनेन पथा गमन-

समये यदि दर्शनदानेन दास्या मे चक्षुषोस्तृप्तिं साधयेस्तदैव कृतकृत्याहं भविष्यामि ।

नवकुमारः—( मतेर्हस्तात् स्वहस्तं मोचयन् ) त्वं यवनी, परस्त्री अतः पुनः साक्षात्कारो न भविष्यति । ( कतिचित् पदानि गच्छति ) ।

मतिः—भवतु गच्छ तावत् । (सहसा नवकुमारस्य पादयोः पतित्वा ) निर्दय ! भवतः कृते आग्राराजसिंहासनमपि मया परित्यक्तम् ।

नवकुमारः—विहाय मम वासनां पुनरपि आग्रानगरीं गच्छ ।

मतिः—( दलिता फणिनीवोन्नमय्य शिरो नवकुमारस्याग्रतः स्थित्वा ) नेह जन्मनि । नेह जन्मनि तव आशां मुञ्चामि । त्वं ममैव भविष्यसि ।

नवकुमारः—(विस्मितः) अये केयं रमणी । दलितफणा फणिनीव फणां विस्तार्यावतिष्ठते ! हन्त स्मरामि—मम प्रथमां भार्यां पद्मावतीम् । यदा एकस्मिन् दिवसे शयनागारात् तां निष्कासयितुम् उद्यतोऽहमभवम्, तदा द्वादशवर्षीया बालिका परावृत्य एवमेव सगर्वमवातिष्ठत,—एवमेव तस्याश्चक्षुः प्रदीप्तम्,—एवमेव तस्या नासिका अकम्पत,—एवमेव च ग्रीवाभङ्गिर्जाता । सुचिरं सा मूर्तिर्मया विस्मृता । इदानीं संस्मरणादेव एतयोः सादृश्यमनुभूयते । का—का पुनस्त्वम् ?

मतिः—अहम्—पद्मावती ! ( निष्क्रान्ता )

नवकुमारः—कथं पद्मावती ! (विमूढ इव क्षणं स्थित्वा निष्क्रान्तः )

---

# पञ्चमोऽङ्कः

## प्रथमं दृश्यम्

[ नवकुमारस्य कक्षः ]

( ततः प्रविशति श्यामासुन्दर्या सह आलपन्ती कपालकुण्डला )

कपालकुण्डला—ननान्दृपतिः कति दिवसानतः परमत्र स्थास्यति ?

श्यामासुन्दरी—श्वोऽपराह्णे एव गमिष्यति । ( सखेदम् ) अहो अद्य रजन्यां यद्यहं तदौषधमुदतोलयिष्यं तदा तं वशीकृत्य मे नारीजन्म सार्थकतामयास्यत् ।

कपालकुण्डला—कथं, दिवसे उत्तोलितेनौषधेन न भविष्यति ?

श्यामासुन्दरी—नहि । दिवसे उत्तोलितमौषधं न फलिष्यति । निशीथे मुक्तकेशेन रमणीजनोनोत्तोलनीयमेतत् ।

कपालकुण्डला—भवतु अहमेकाकिनी एव गत्वा तदाहरिष्यामि ।

श्यामासुन्दरी—नहि । रजन्यां त्वया बहिर्न गन्तव्यम् ।

कपालकुण्डला – कथं नाम ?

श्यामासुन्दरी—रात्रौ एकाकिन्याः कुलकामिन्या बहिर्गमनं न सङ्गच्छते ।

कपालकुण्डला—का हानिः ? रात्रौ गृहाद् बहिर्गमनेन अहं कुचरित्रा भविष्यामि इति ?

श्यामासुन्दरी—अहं नैवं मन्ये । किन्तु दुर्जना निन्देयुः । तेन चाग्रजो मे दुःखभाग्भविष्यति ।

कपालकुण्डला—अनेन यदि तत्रभवान् दुःखितः स्यात् तदा किं मया करणीयम् ? स्त्रीजनानां विवाहो दासीत्वफल इति यद्यहमज्ञास्यम् तदा न कदापि पाणिमग्राहयिष्यम् ।

श्यामासुन्दरी—भवतु क्रियताम् यत् ते रोचते। अयम् अत्रभवान् अग्रजो मे इत एवागच्छति। ( निष्क्रान्ता )

नवकुमारः—(प्रविश्य कपालकुण्डलाया हस्तं सादरं परिगृह्य) मृण्मयि !

कपालकुण्डला—आज्ञापय।

नवकुमारः—कुत्रासि गन्तुकामा ?

कपालकुण्डला—स्वामिनं वशीकर्त्तुं श्यामासुन्दरी औषधं याचते, तस्यैव अन्वेषणाय।

नवकुमारः—पूर्वस्मिन् दिवसे सकृत् गतवती। अद्य पुनः कथम् ?

कपालकुण्डला—तदा न प्राप्तम्। अतोऽद्य पुनरन्वेष्टव्यम्।

नवकुमारः—परं दिवसे एवान्वेषणं वरम्।

कपालकुण्डला—दिवसे उत्तोलितमौषधं न सिद्धिदं भवतीति औषध-नियामकेन उक्तम्।

नवकुमारः—भवतु देहि मे औषधस्य परिचयम्। अहमेवानीय दास्यामि।

कपालकुण्डला—पुरुषेणोत्तोलितमौषधं न सिद्धिदं भवति। निशीथे मुक्त-केशेन स्त्रीजनेन उत्तोलनीयमेतत्।

नवकुमारः—भवतु, अहमपि त्वया सह गमिष्यामि।

कपालकुण्डला—वाढम्! आगच्छ। अहं सुचरिता न वेति प्रत्यक्षं कुर्याः। ( किमप्युत्तरं दातुम् असमर्थो दीर्घं निःश्वस्य कपालकुण्डलाया हस्तं परित्यज्य निष्क्रान्तो नवकुमारः। ततो निष्क्रान्ता कपालकुण्डला)।

---

द्वितीयं दृश्यम्।

[ नवकुमारगृहसमीपस्थितं वनमध्यगतं भग्नं मन्दिरम् ]

( ततः प्रविशति प्रज्वलिताग्निसमीपे ध्याननिरतः कापालिकः )

कापालिकः—(स्तौति)

ॐ भावयेत् कालिकां देवीमिन्द्रनीलसमप्रभाम् ।
व्योमनीलां महाचण्डां सुरासुरविमर्दिनीम् ॥
त्रिलोचनां महारावां सर्वाभरणभूषिताम् ।
कपालकर्तृकाहस्तां चन्द्रसूर्योपरिस्थिताम् ॥
शवजालगतां चैव प्रेतभैरववेष्टिताम् ।
वसन्तीं पितृकान्तारे सर्वसिद्धिप्रदायिनीम् ॥

( स्तवान्ते नेत्रे निमील्य ध्यानस्थे कापालिके प्रविशति ब्राह्मणवेश-धारिणी मतिः । )

मतिः—सम्प्रति कपालकुण्डलया सह स्वामिनो विच्छेदसाधनमेव मे प्रथमं कार्यम् । ततः स ममैव भविष्यति । ( कतिचित् पदानि गत्वा ) अहो निविडमिदं वनं । रात्रिरप्यागता । एकाकिनी चास्मि । तदिहैव वृक्षमूले क्षणं विश्रम्य स्वेष्टसम्पादनाय स्वामिनो गृहमेव यास्यामि ।

कापालिकः—(स्तौति)

ॐ धूम्रवर्णां महादेवीं त्रिनेत्रां शशिशेखराम् ।
जटाजूटसमायुक्तां व्याघ्रचर्मपरिच्छदाम् ॥
कृशाङ्गीमस्थिमालाढ्यां कर्तृकाढ्यकराम्बुजाम् ।
निलीनाक्षीं सुदंष्ट्राञ्च पातालसन्निभोदराम् ॥

मतिः—( मनुष्यकण्ठस्वरमाकर्ण्य चकितविस्मिता ) भोः किन्नु खलु एतस्मिन् निविडारण्ये मनुष्यकण्ठध्वनिः श्रूयते । ( कतिचित् पदानि गत्वा ) अये नातिदूरे प्रज्वलिताग्निसमीपे दृश्यते होमनिरतः कश्चन कापालिकः ।

कापालिकः—हूँ कपालकुण्डलां हन हन स्वाहा । ( इति वारत्रयं जुहोति )

मतिः—अये मन्त्रमध्ये कपालकुण्डलाया नाम श्रूयते । तत् किम् एषोऽपि जनः कपालकुण्डलायां बद्धवैरः ? भवतु यथा तथा वा, होतुः समीपमेव यास्यामि । ( कापालिकसमीपं गत्वा सशङ्कं स्थिता । )

कपालकुण्डला—( औषधान्वेषणपरा प्रविश्य ) औषधान्वेषणाय इतस्ततो भ्रमन्ती निविडं वनं प्रविष्टास्मि। साम्प्रतं घनविटपविन्यासात् चन्द्रालोकः सर्वथा रुद्ध एव वर्तते। पन्थाश्च क्रमेण अलक्ष्यतां गाहते। तत् किमिदानीं करिष्ये। ( समन्तादवलोक्य होमाग्निशिखां दृष्ट्वा ) अये नातिदूरे आलोक इव दृश्यते। तत् किम् एतत्? भवतु उपसृत्य तत्त्वतो ज्ञास्यामि। ( निःशब्दपदसञ्चारेण गृहसमीपं गत्वा सावधानं तिष्ठति। )

कापालिकः—(होमान्ते मतिं दृष्ट्वा) कस्त्वम्?

मतिः—भगवन्! नमस्ते। लुत्फोन्निसां मां विद्धि।

कापालिकः – किमर्थमागतासि? ( क्रमशः )

---

# कर्मणः स्वरूपप्रयोजने

( पर्वानुवृत्तम )

[ निबन्धकः—श्रीदीननाथतर्कवेदान्ततीर्थः ]

शास्त्रविहितानि च कर्माणि चतुर्विधानि काम्यनित्यनैमित्तिकप्रायश्चित्ताख्यानि। एषामवान्तरविभागाश्च बहवः निषिद्धानामपि कर्मणां बहवो विधाः। वर्णाश्रमतदुभयगुणनैमित्तिकादिप्रकारैरप्यन्यथा बहवो विभागाः स्मृतिकारैर्महर्षिभिः कृताः। उत्पद्यमाना हि क्रियेन्द्रियव्यापारनिमित्तोत्पद्यते। इन्द्रियव्यापारश्च कृतिनिमित्तः, कृतिरिच्छयेच्छा ज्ञानहेतुकेति। तथोक्तं "ज्ञानजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः। कृतिजन्या भवेच्चेष्टा चेष्टाजन्या क्रिया भवेत्"। इति। इच्छा कामः कामना फलतृष्णेति यावत्। कामनया हि पुरुषः कामविषये प्रवर्तते। प्रवर्तमानश्च शास्त्रविषये धर्मं शास्त्रे निषिद्धे चाधर्मं बाहुल्येनोपचिनोति। आभ्यां धर्माधर्माभ्यां शुभाशुभजन्मनोः सुखदुःखे अनुभवति। तत्र धर्माधर्मयोः साम्यान्मानुषं जन्म धर्मभूयस्त्वाद्दैवमधर्मबाहुल्यान्नारकादियोनिमृच्छति।

न च कामनायाः पुरुषप्रवृत्त्यङ्गीकारे फलाभावात् कामनाऽभावेन नित्य-

नैमित्तिकयोः प्रवृत्त्यभावप्रसङ्ग इति वाच्यम्। नित्यादीनां विध्युद्देशे फलोल्लेखाभावेऽपि श्रुतिस्मृत्योरन्यत्र प्रत्यवायपरिहारस्य वा दुरितक्षयस्य वा पितृलोकादि-प्राप्तेर्वा फलस्य कीर्तनात्। तद् यथा :--"कर्मणा पितृलोकः" [ बृः उः १।५ १६ ]। 'सर्वे एते पुण्यलोका भवन्ति' [ छाः उः २।२३।१ ]। 'नित्य-नैमित्तिकैरेव कुर्वाणो दुरितक्षयम्' इत्यादिषु। किञ्च प्रवृत्तिं प्रति कामनाया हेतुत्वसिद्धौ तदन्यथानुपपत्त्या विश्वजिन्न्यायेन नित्यादिष्वपि फलस्य कल्पनात्। अन्यथा तत्र प्रवृत्तिरेव न स्यात्। 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च'ेत्यादि भगवद्वचनमप्यत्र ज्ञापकम्। अन्यथा तद्वचनविरोधप्रसङ्गः स्यात्। यद्यपि नित्यनैमित्तिकयोः प्रत्यवायपरिहारफलसाम्यं नित्यनैमित्तिकप्रायश्चित्तानां वा पापक्षयसाम्यं तथापि निमित्ताभावे विधिप्राप्तं नित्यं, पापव्यतिरिक्तनियत-निमित्ते विधिविहितं नैमित्तिकं पापमात्रनिमित्ते विहितं प्रायश्चित्तमिति तेषां नाभेदः। फलमुद्दिश्य विहितं कर्म काम्यम्।

काम्यकर्मणा स्वर्गादिश्रेयोऽवाप्यते। स्वर्गादिजनकं पुरुषगतमदृष्टं धर्म इति तार्किकाः। स्वर्गाद्यपूर्वजनकयागादिक्रियैव धर्म इति भाट्टाः। यागा-दीनां प्रत्यक्षत्वेऽपि तेषां श्रेयःसाधनत्वस्याप्रत्यक्षत्वेन चोदनालक्षणत्वात् न तेषु चोदनासूत्रोक्तधर्मलक्षणाव्याप्तिः।

अर्थरूपपुरुषार्थो यथा कर्मणो भवति तथा लोके प्रसिद्धिरेव। कामः, काम्यो भोग्यविषय इति यावत् स्रगन्नपानादिः। सोऽपि कर्मजन्यो लोकप्रसिद्धः, मोक्षस्त्ववशिष्टः। स च यथा कर्मणः प्रयोजनं तथा प्रतिपाद्यते।

नित्यनैमित्तिकानुष्ठानं हि त्रिधा सम्भवति। प्रत्यवायपरिहाराद्युद्देशेन पितृलोकाद्युद्देशेन वेदनोद्देशेन च। प्रत्यवायपरिहाराद्युद्देशेन नित्यनैमित्ति-कयोरनुष्ठाने प्रत्यवायपरिहारादिफलं मुख्यं भवत्यानुषङ्गिकी च चित्तशुद्धिः। पितृलोकादिकामेनानुष्ठीयमानयोः पितृलोकप्राप्तिफलं प्रधानं तल्लोकभोगानु-सारिणी चित्तशुद्धिश्चानुषङ्गिकी। वेदनोद्देशेनेश्वरार्पणबुद्ध्या सम्पादने चित्त-शुद्धिविविदिषाक्रमेण ज्ञानोत्पत्तिर्भवति। ( क्रमशः )

---

# छन्दोगप्रक्रिया

[निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः]

( पूर्वानुवृत्ता )

क्रव्यादमकृरवन् गुहानाः स्त्रीणामुपस्थमृषयः पुराणाः। तेनाज्यमकृरवं त्रैशृङ्गं त्वाष्ट्रं त्वयि तद्दधातु स्वाहा। अस्य तृतीयमन्त्रस्य उपरिष्टाज्ज्योतिस्त्रिष्टुपछन्द उपस्थरूपकामो देवता उपस्थप्लावने विनियोगः। इति मन्त्रत्रयेण त्रिरभिषिञ्चेत्। उत्तराभ्यां ऋग्भ्यां तथाभिषेक्तव्यं यथोपस्थो विशेषतः प्लावितो भवति। कृताभ्युदयिकश्राद्धः सम्प्रदाता लग्नसमये सम्प्रदानस्थानस्योत्तरतः स्त्रियंषां वद्धा उत्तराभिमुख उपविष्ट आचम्य विष्णुं स्मृत्वा स्वस्तिसूक्तं पठित्वा पुण्याहादिकं वाचयेत्। ततो वरं पश्यन् कृताञ्जलिः ॐ साधु भवानास्ताम् इति वदेत्। वरः ॐ साध्वहमासे इति वदेत्। पुनः सम्प्रदाता ॐ अर्चयिष्यामो भवन्तम् इति वदेत्। वरः ॐ अर्चय इति। ततः सम्प्रदाता गन्धपुष्पफलताम्बूल-यज्ञोपवीताङ्गुरीयकवासोभिर्वरमभ्यर्च्य दक्षिणं जानु विधृत्य वृणुयात्—ॐ विष्णुः ॐ तत्सदोमद्यामुके मासि अमुकराशिस्थे भास्करे अमुकपक्षे अमुक-तिथौ अमुकगोत्रः श्रीअमुकदेवशर्मा अमुकगोत्रस्यामुकप्रवरस्याक्सुकदेवशर्मणः प्रपौत्रं अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्मणः पौत्रं अमुकगोत्रस्यामुकदेवशर्मणः पुत्रं अमुकगोत्रममुकप्रवरं श्रीअमुकदेवशर्माणम् अमुकगोत्रस्य अमुकप्रवरस्यामुक-देवशर्मणः प्रपौत्रीं अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्मणः पौत्रीं अमुकगोत्रस्यामुक-प्रवरस्यामुकदेवशर्मणः पुत्रीम् अमुकगोत्राम् अमुकप्रवरां श्रीअमुकीदेवीं शुभब्राह्म-विवाहेन दातुं भवन्तमहं वृणे। वरः ॐ वृतोऽस्मीति वदेत्। पुनः सम्प्रदाता यथाविहितं विवाहकर्म कुरु इति वदेत्। वरः यथाज्ञानतः करवाणीति वदेत्। अस्मिन्नवसरे स्त्रीणामाचारं मुखचन्द्रिकाञ्च कारयेत्।

( क्रमशः )

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharys—Edited by Pt. Bamacharan Kvyatirtha. As. 12 ; As. 10. (for membera).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. Re. 1-8 ; Re, 1-4 ( for members ).

14. **Nala-damayantiyam** ( a new Drama ) of MM, Kalipada Tarkacharya. Rs. 1-8 ; Rs. 2 ( for members ).

15. **Prashastapada-bhashyam**—Edited by MM, Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2 ; Re. 1-8 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr, Pashupatinath Shastri M. A,, B. L., Ph. D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; Rs. 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. bv Prof Akshayakumar Shastri, Rs. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed, by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM Kalipada Tarkacharya. Rs 7 ; 6 ( for members).

21 **Manodutam** of Vishnudasa—Ed. by prof. Chintaharana Chakravarti, M. A. Re. 1-4 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs, 2 ; Re. 1-8 ( for members).

23. **Devisatakam** of Mahmahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., As. 8.

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kali pada Tarkacharya, Rs. 5 ; Rs 4-8 ( for members ).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re. 1-8 ; Re. 1-4 ( for members ).

---

# अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनस्य

## आवेदनम्

अखिलभारतसम्मानिता संस्कृतभाषा यथा भारतराष्ट्रस्य राजभाषात्वेन परिगणिता स्यात् तदर्थं १६५८ खृष्टाब्दीये मे-मासे युगाचार्य-श्रीश्रीसीताराम-दासोङ्कारनाथचरणानां प्रधानाध्यक्ष्येण कलिकातामहानगर्यामेकमखिलभारतीय-संस्कृतराष्ट्रभाषासम्मेलनमनुष्ठितम्। तत्र तदीयोद्देश्यसाधनाय काचित् साधारणपरिषत् काचित् कार्यनिर्वाहकपरिषच्च सुसंघटिते। तत्र तत्र सर्वेषां भारतहितैषिणां यथासम्भवं सदस्यपदाधिकारेण सर्वथा साहायकविनियोगः सम्प्रार्थ्यते।

तत्र साधारणसदस्यपदाधिकाराय प्रतिवर्षमेकं रूप्यकं कार्यनिर्वाहकसदस्य-पदाधिकाराय च रूप्यकत्रयं सम्पादकसविधे दातव्यम्।

विनीत—

श्रीनिर्मलचन्द्रदासगुप्त-
श्रीनगेन्द्रनारायणचतुर्धुरीणयोः
सम्पादकयोः

स्थानसङ्केत :—
३नं शम्भुनाथपण्डित ष्ट्रीट्
कलिकाता-२०

### तत्र विशिष्टकर्माध्यक्षा :—

पूज्यपाद—श्रीश्रीसीतारामदासोङ्कारनाथमहाराजः ( सभापतिः )

डाः—श्रीनलिनीरञ्जनसेनगुप्त एम-डि महोदयः ( कार्यनिर्वाहकसभापतिः )

विचारपति—श्रीरमाप्रसादमुखोपाध्याय एम् ए. वि-एल् ( पृष्ठपोषकः )

श्रीश्रीजीवन्यायतीर्थ—श्रीचपलाकान्तभट्टाचार्य एम्-ए—श्रीवसन्तकुमार-चट्टोपाध्याय एम्-ए प्रमुखाः ( सहसभापतयः )। उक्तौ सम्पादकौ च।

Reg. No. C 1073

Vol. XXXXI. September 1958
No. 5 १८८० शकीये
४१श-वर्षस्य भाद्रे
५म-संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री-काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1-4d

# Sanskrit Sahitya Parishat Series

( Revised up to December, 1957 )

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chandra Siddhantabhushana. Re. 1-4; *R*e. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan. Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Re. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. (*f*or members). Rs. 2. 8 ; Rs. 2.

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8. Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri- As. 4.

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Sbastri, M. A', B. L. Ph, D. Re. 1-8 ; Re. 1-4. ( for members ).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushana. As, 14 ; As. 10 (for members). ( Cont. to. Cover 3rd Page )

---

Printed by Bishnupada Bhattacharya M. A. Kavyatirtha. at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghosc Lane, Calcutta and published by the same form Sanskrit Sahitya parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutt

इयं संस्कृत-साहित्य-परिषत् प्रतिभा-रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

संस्कृतसाहित्यपरिषत्

Vol. XXXXI. No. 5 | १८८०-शकीये भाद्रे ४१श-वर्षस्य ५म-संख्या | September 1958.

# मतिमञ्जरी

## बालकृष्णः

निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः

या शक्तिर्भवदुःखशोकशमनी कृष्णादभिन्नाभया
या तेनैव सहावतीर्य भुवने नन्दालये संस्थिता ।
कंसस्याक्रमणे गतोर्द्ध्वगगने "हन्ताऽस्ति बालः क्वचि-
दित्युक्त्वा सहसा तिरोहितवती सा योगिनी पातु नः ॥

श्रावणी कृष्णाष्टमी । तामसी रजनी घोररूपा । प्रबलवारिधारा-सहस्रसमाकुला धरणी । स्तिमिता दश दिशः । निस्तब्धा नगरी निःशब्दा । अटवी शान्तमृगप्रचारा । उच्छ्वसिता तरङ्गिणी बहलतरङ्गसङ्कटा भीषणा चोत्कुलिता । दुर्योगोपकरणेन सन्नद्धा मथुरा यमुना च । प्रक्षीणप्रकाशाः प्रदीपाः कंसकारागारं व्याकुलयन्तीव । एवं दुर्जयप्रकृतिदुर्योगे काले— विश्वे चाधर्मबल-परित्रस्ते देवद्विजहिंसापरायणे राजनि सज्जननिग्रहनिरते राजपुरुषे भविष्यत्-

कलिप्रभावप्रभावित इवावनिविबुधेऽधर्मभारवहनासमर्थायामिलादेव्यां "परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" ॥ इति स्वसन्धां सफलीकर्तुमेव दुर्योगपूर्णायां रजन्यां धरण्याञ्च कंसकारागारे सहसाविर्भूय दिव्यमूर्त्या जनकहृदयं व्याकुलीकृत्याशरीरिण्या वाण्या च जनकं प्रबुद्ध्य स्वशक्त्या दुर्गया शरीरं विनिमातुं पितृक्रोडे यश्चचाल यशोदासदनम्। यश्च पथि यमुनातरङ्गविह्वलचित्तस्य जनकस्य समधिकव्याकुलतासम्पादनाय स्वप्रभावेण भगवत्ताप्रकटनाय च यमुनाजले निपत्य पितुरङ्कात्, पुनश्च जानुदघ्नं जलं सम्पाद्य पारेयमुनं समानयच्च लीलारक्षकं पितरम्। यश्च एवं क्रमेण यशोदाया उत्सङ्गे स्वयं स्वशरीरं विनिमाय तस्या एव स्तन्येन व्यवर्द्धत। यश्च बाल्यलीलायामेव पूतनादिशरीरं हेलया विहङ्गादिभक्षणाय वितीर्य मातुर्भ्रातरमपि दुर्वृत्तं कंसं कौशलेन निजघान। यश्च पुनर्गोपाङ्गनाभिः सयत्नरक्षितं नवनीतं क्षीरसारञ्चापहृत्य मातृहस्ते बन्धनमवाप। यमलार्जुनयोर्मुक्तिं च विदधौ। यस्य बाल्यलीलैव जगतः सर्वानुपद्रवान् शमयितुं समर्था, यस्य च कैशोरलीला महाभारतसंग्रामेणाधर्माभ्युदयं विनाशयामास। धर्मराज्यं च संस्थापयामास। तस्य ब्रह्मणः परमात्मनो भगवतो वा जन्मदिवसे तां तां लीलामनुस्मृत्य कातरस्वरेणोच्चैः प्रार्थयामहे—

पापराशिभरितेऽत्र भूतले युद्धहुंकृतिरवैः समाकुले।
दृप्तदर्पहरणाय लीलया बालकृष्ण! कृपया विलोक्यताम्॥

---

# योगिभक्तचरितम्

( काव्यम् )

(निबन्धकः—श्रीकाश्यपकविः)

( पूर्वानुवृत्तम् )

विलम्बितु' नालमतः किलाहं प्रबाधते मां नियमानुवृत्तिः ।
तदेष गच्छामि कुरुष्व नित्यं कृत्यं निजं लोकहितं नमस्ते ॥४६

प्रतिप्रणामेन ततोऽभिनन्दितः शिष्यैः सदाचारदृशाभिवन्दितः ।
ससम्भ्रमं तैर्बहुदूरमन्वितो यतिः प्रतस्थे बहुभावभावितः ॥४७

अस्तं ययौ तेन समं प्रभाकरो गृहे तमस्तद्विरहादिवायतम् ।
नगेन्द्रसङ्गादिव दीपसम्भवात् प्रभोच्चयात्तत् कथमप्यगाल्लयम् ॥४८

ततः प्रभृत्येव महर्षिसंज्ञया नगेन्द्रनाथो भुवि विश्रुतोऽभवत् ।
महामहिम्ना यतिना प्रवर्तनात् तन्नाम्नि लोका बहुमानमादधुः ॥४९

यतिवरोदितवाङ्मयविस्तरात् समधिगत्य गुरोर्महिमोच्चयम् ।
तदवधि स्वगुरावधिकाधिकां मनसि भक्तिममी समुपाश्रिताः ॥५०

इति श्रीकाश्यपकविविरचिते योगिभक्तचरितकाव्ये
अष्टमसर्गः समाप्तः ।

---

## नवमः सर्गः

अथ चिरं परकीयगृहे वसन् न खलु शान्तिमसौ समुपागमत् ।
परगृहस्य विधा निजकर्मणां नहि कदापि वहत्युपयुक्तताम् ॥१

चिकीर्षिता चेदुपयुक्तताकृते कदापि तस्मिन् भवने सुसंस्कृतिः ।
गृहाधिपस्यानुमतिस्तदादितो व्यपेक्षितावश्यममुत्र कर्मणि ॥२

व्ययाद् विभीतो न हि स स्वयं ततः प्रवर्तते नापि ददाति सम्मतिम् ।
क्रिया ततो नश्यति गेहवासिनो दुःखाय गेहे भृतिभाजि वर्तनम् ॥३
अंशे गृहस्य त्रुटिते कदाचन स्वामी विधत्ते परुषोक्तिसाहसम् ।
साक्षान्निरस्तोऽपि विशेषकारणात् परोक्षमस्मान्न निवर्तते हि सः ॥४
पदे पदे विन्दति भीतिमन्तरे भृत्या गृहीते भवने स्थितो जनः ।
किंवा कदा स्याद् भवनाधिपो यथा कुर्यादनिष्टं परुषोक्तिसाहसम् ॥५
भृतिप्रदानाय विनिश्चिते दिने न चेद्भृतिं गेहपतिः प्रपद्यते ।
मलीमसं भाति तदा तदाननं कदापि वा स्यात् परुषोक्तिरुद्धता ॥६
गृहाधिपेनाननुमोदिताध्वना गृहाधिवासी यदि वा प्रवर्तते ।
तदाविचार्यैव हिताहितं प्रभुर्गृहप्रहाणे दिशति प्रवर्तनम् ॥७
गृहाधिनाथो भृतिमेव केवलां गुर्वीं प्रजानाति भृतिप्रियान्तरः ।
न गौरवं ध्यायति गेहवासिनस्तेनाप्रशस्ता भृतके गृहे स्थितिः ॥८

इत्थं विचार्य बहु तत्र स योगिराजो
भृत्या गृहीतमपहातुमियेष गेहम् ।
योगाद्यलौकिकपथेऽपि चिरं स्थितानां
दक्षात्मनामतिहता नहि लोकदृष्टिः ॥९
आहूय शिष्यनिवहानथ मानसं स्वं
प्राकाशयत् सुदृढचित्तगतिः स योगी ।
शिष्या गुरोरभिमतं विषयं विधातुं
संकल्पमात्मनि दधुः खलु निर्विचारम् ॥१०
सिद्धिं गता योगविधौ महान्तः
यद् यद् दृढं चेतसि कामयन्ते ।
तत्तद् यथाकालमुपैति सिद्धिं
न व्यर्थतामेति सतां हि कामः ॥११
तदीयसंकल्पमहामहिम्ना
सिद्धेरुपाया उपयन्ति सर्वे ।

न विघ्नलेशोऽपि करोति वैरं
ते निर्विरोधेन ततः फलन्ति ॥१२

ततः प्रभृत्येव महामहिम्नो
नगेन्द्रनाथस्य विशिष्टशिष्याः ।
ध्यानप्रकाशप्रमुखाः प्रकामं
भूमिं ग्रहीतुं विदधुः प्रयत्नम् ॥१३

शिष्येषु ये भक्तिमतां वरिष्ठाः
वित्तोच्छ्रितास्ते मनसि प्रसन्नाः ।
अपेक्षितस्य द्रविणस्य दाने
प्रतिश्रुतिं तत्र वितीर्णवन्तः ॥१४

ततः परं शिष्यगणप्रयत्नात्
क्रीतं महत् किञ्चन भूमिखण्डम् ।
येन प्रसन्नं हृदयं बभूव
गुरोस्तथा शिष्यगणस्य भूयः ॥१५

( क्रमशः )

---

# कर्मणः स्वरूपप्रयोजने

( पूर्वानुवृत्ते )

[ निबन्धकः—श्रीदीननाथतर्कवेदान्ततीर्थः ]

ननु पापक्षयाद्युद्देशेनापि नित्यादीनामनुष्ठानाच्चित्तशुद्ध्यादिपरम्परया ज्ञान-मुत्पद्यत इत्यभ्युपगन्तव्यमन्यथा आदितः कथञ्चिच्चित्तशुद्ध्यभावेन निरभिसन्धि-तयापि कर्मानुष्ठानं न सम्भवेत्, तत् कथं पृथग् वेदनोद्देशेनानुशासनमिति चेत्, सत्यं, प्रत्यवायपरिहारं वा पापक्षयमात्रं वोद्दिश्य नित्यादीनां करणेऽपि चित्त-

शुद्धिर्भवति, परन्तु पापक्षयादिकामनाया अपि कामकल्पत्वात्तादृश्याश्चित्तशुद्धेः क्रमेण कामनापसृतिद्वारा विविदिषोपयोगिनी सत्त्वशुद्धिर्भवति, ततो विविदिषा, ततः श्रवणादिजनितं ज्ञानमिति अतिचिरेण वेदनोपकारित्वम्। केवलवेदनोद्देशेनानुष्ठाने त्वल्पीयसा कालेन ज्ञानोत्पत्तियोग्या बुद्धिशुद्धिः समुपजायत इति पृथगनुशासनं समुचितमिति विवेकः॥

वेदनोद्देशेन नित्याद्यनुष्ठाने लिङ्गं "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने" [ बृः उः ३।४।२६ ] त्यादि श्रुतिवाक्यम्। सूत्रं च "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" [ ब्रः सूः ३।४।२६ ]।

विविदिषन्तीत्यत्र यद्यपि यज्ञादीनां विविदिषायां करणत्वेन श्रवणं तथाप्यश्वेन जिगमिषतीत्यत्र यथेच्छविषयीभूतगमन एवाश्वस्य करणत्वं योग्यत्वान्नतु जिगमिषायां तथेच्छाविषयज्ञाने करणतया वा येन केनचित् प्रकारेण वा यज्ञादीनामन्वयः। विविदिषान्वये च नित्यादीनां कामसंयोगापत्तेः।

ननु वेदनोद्देशेनापि नित्याद्यनुष्ठाने वेदनस्य तत्फलतया तेषां निरभिसन्धित्वानुपपत्ते"रेतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि चे"त्यादिभगवद्वाक्येन विविदिषावाक्यस्य विरोधप्रसङ्ग इति चेन्न क्रियाकारकफलादिसर्वाध्यारोपणनिषेधात्मकत्वेन जायमानात्मबोधस्य फलत्वाभावात्तदुद्देशेनानुष्ठानेऽपि न तेषां सकामत्वापत्तिरन्यथा तेषु प्रवृत्तिरेव न स्यात्। न केवलं नित्यादीनां, किन्तु ज्ञानोद्देशेन कृतानां सर्वेषां विहितकर्मणां निष्कामत्वम्। "एतच्च नियतं सङ्गरहितमरागद्वेषतः कृतम्। अफलप्रेप्सुना कर्म यत्तत् सात्त्विकमुच्यते" इति भगवद्गीताश्लोकटीकायां नीलकण्ठैरुक्तम्। यथा—"अरागद्वेषतः कृतं निष्काममित्यर्थः। फल्गु च लीयते चेति फलं, क्रियया प्राप्यमानमनात्मवस्तु तदन्यदफलमनागन्तुकं परिपूर्णमविनाशि आत्मतत्त्वं तत्प्रेप्सुना कृतं विविदिषन्ति यज्ञेनेति श्रुत्यात्मलाभार्थं यज्ञादेर्विनियोगात् तत्कर्म सात्त्विकमुच्यते" इति। आत्मलाभस्तु आत्मज्ञानं, ज्ञानलाभयोरात्मन एकार्थत्वादिति भाष्यकारैरुक्तम्। [ बृः उः १।४।७ ]

वेदनस्य फलत्वाभ्युपगमे तु ज्ञानातिरिक्तफलत्यागार्थ एव भगवदभिप्रायो व्याख्येयः। एवञ्च 'खादिरो यूपो भवति', 'खादिरं वीर्यकामस्य भवति' इति वाक्यद्वयेन यथैकस्य खादिरस्य क्रत्वर्थत्वपुरुषार्थत्वसंयोगभेदस्तथा सर्वेषां स्वाश्रमविहितकर्मणां स्वोत्पत्तिवाक्यविहितफलविविदिषावाक्यस्थविविदिषा-संयोगाभ्यां न नित्यानित्यत्वविरोधः। एकस्य तूभयत्वे संयोगपृथक्त्वमिति न्यायादुभयसम्भवात्। केवलकर्मापेक्षया उपासनासंयुक्तकर्मभिर्झटिति बुद्धेः प्रत्यक्प्रवणताकरणं; "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति [ छाः उः १।१।१० ] इति लिङ्गाज्ज्ञायते। स्मृतावपि "मामनुस्मर युध्य च" [ गीः ८।७ ] इत्याद्युक्तम्। एवं निष्कामतयानुष्ठीयमानेन शास्त्र-विहितकर्मणा विद्यया चापरब्रह्मविषयया कृतसत्त्वशुद्धेरपि गृहस्थस्य वेदान्त-श्रवणादिबलेन परविद्योत्पत्तावर्थसिद्धः सन्न्यास इति सन्न्याससहिताज्ज्ञानाद-विद्यानिवृत्तिरूपमोक्षसिद्धिर्भवति। तत्र कर्मणां ज्ञानोत्पत्तिजनकतया मोक्षे आरादुपकारकत्वमिति मोक्षजनकत्वमौपचारिकम् इति वेदान्तिमतम्। नन्वेवं गार्हस्थ्ये स्थितानां श्रवणादिबलेन ज्ञानोत्पत्तेर्ज्ञानादेवमुक्तौ सन्न्यासस्य तद्विधेश्च-वैयर्थमिति चेन्न, 'विविदिषु' प्रति तयोः सार्थक्यात्। विदुषोऽपि बिधिं विना सन्न्यासस्यार्थसिद्धत्वेऽपि तादृशसन्न्यासविधिमनुमोदते स।

ज्ञानोत्पत्तेः प्राग्विद्यासिद्ध्यर्थं गृहस्थोऽपि सन् "पुत्रैषणाया वित्तैषणाया लोकैषणायाश्च व्युत्थाये'त्यादि शास्त्रमनुसृत्य व्युत्थाननियममन्वग्रात्। व्युत्थानं सन्न्यासो विषयभोगेच्छाविरोधिमनोवृत्तिः। एतादृशः सन्न्यासश्च गृहे तिष्ठतोऽपि सम्भवति। व्यासवशिष्ठजनकादीनां दर्शनात्। विद्योत्पत्त्यनन्तरं सर्वकर्मसन्न्यासेऽपि पूर्वाभ्यस्तव्युत्थाननियमवासनायाः प्राबल्यात्तन्नियमे एव प्रवर्त्तते विद्वान् नानियमे। अनियमवासनाया अत्यन्तमभिभूतत्वात् तत्र तस्य प्रवृत्त्यसम्भवात्। स्वप्रयोजनाभावेऽपि लोकसंग्रहार्थत्वेन नियमानुष्ठानसम्भवः। किञ्च जीवन्मुक्तिसुखार्थमपि विदुषः कर्मसन्न्यास आवश्यकः। याज्ञवल्क्यादौ तद्दर्शनात्।

एतेन गैरिकधारणादिरूपवहिःसन्न्यासमन्तरेणापि ज्ञानोत्पत्त्यभाव इति केषाञ्चिन्मतमपास्तम्। वहिर्लिङ्गस्य ज्ञानप्रयोजकत्वाभावात्। एतदप्युक्तं

नीलकण्ठैर्भगवद्गीताटीकायाम् । यथा—"एतं वै तमात्मानं···भिक्षाचर्यं चरन्ती'ति ज्ञानपरिपाकार्थस्य जीवन्मुक्तिसुखार्थस्य वा याज्ञवल्क्यादिभिरनुष्ठितस्य विद्वत्सन्न्यासस्यापि शास्त्रे दर्शनात्"। "असन्न्यासिनो ज्ञानमेवं नोत्पद्यत इति प्राचामाग्रहो विक्षेपककर्मत्यागरूपसन्न्यासविषयो नतु काषायपरिधानमात्र-विषयः गार्गीव्यासवशिष्ठादीनामतथाविधानामपि ज्ञानोत्पत्त्यवगमात्" [गीः ३।८] आनन्दगिरिपादैरपि मुण्डकोपनिषद्भाष्यटीकायामेवमुक्तम् । यथा — "अलिङ्गादिति, कथम्, इन्द्रजनकगार्गीप्रभृतीनामप्यात्मलाभश्रवणात् । सत्यं, सन्नयासो नाम सर्वत्यागात्मकस्तेषामपि स्वत्वाभिमानाभावादस्त्येवान्तरः सन्नयासो, वाह्यं तु लिङ्गमविवक्षितं, 'न लिङ्गं धर्मकारणमिति स्मरणा'दिति ।

( क्रमशः )

---

# राजयक्ष्मचिकित्साविमर्शः

निबन्धक-कविराज-श्रीमुरारिमोहन घोष. ए, एम., भि, आयुर्वेदाचार्य
आयुर्वेदमहोपाध्याय-काव्यतीर्थ-वेदान्तशास्त्री

साम्प्रतमपि अस्मद्देशेषु एवम्भूतानि भेषजानि विद्यन्ते यैरसाध्यमपि साध्यते, तानि चान्वेषणगम्यानि । यक्ष्मरोगः अतीव दुरारोग्यः इत्यत्र नास्ति सन्देहः ।

एतेनासौ नोपशममर्हति एवमपि आशङ्का न कर्तव्या, उपशमितोऽयं रोगो बहुत्र इति अस्य उपशान्ति र्नासम्भवा, तथापि अवस्थाभेदेन रोगस्य साध्यत्वम-साध्यत्वञ्च विचक्षणचिकित्सकेन प्रेक्षणीयम् । सर्वेषामेव रोगाणां साध्यासाध्यत्वं विद्यते । यथा क्वचित् साधारणज्वरव्याधिग्रस्ता अपि मनुष्या मृत्युमुखं यान्ति ।

  

किन्तु यथा तस्मान्न भीतिस्तथा यक्ष्मक्षयरोगोत्पत्तिं श्रुत्वा तदसाध्यतापि नाशङ्कनीया। दुःसाध्यं ज्ञात्वा सावधानेन भवितव्यम्। रोगभीरुमेव रोगा आक्रामन्ति।

ज्वरादिसाधारणव्याधितो वयं भीतिं न गच्छामः, सोऽपि एतेनास्मत्-सकाशे पराजयं स्वीकरोति। साध्यमध्ये च समवतिष्ठते। तथा यक्ष्मरोगसम्बन्धेऽपि चिन्तनीयम्।

रोगिजनेन सर्वदा ज्ञातव्यं यदहं निरामयो भवितुमर्हामीति। आयुर्वेदेषु मुक्तकण्ठं स्वीकृतं तदाचार्यैः।

अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नरः।
परिसंवत्सरो याप्यः सर्वलिङ्गन्तु वर्जयेत्॥

यक्ष्मरोगसम्बन्धे यावन्ति लक्षणानि अभिहितानि यदि तेषां सर्वाण्येव प्रकटानि तदासावसाध्यो मृत्युहेतुश्चेति बोद्धव्यम्। मानवसकाशे यक्ष्मरोगः सम्प्रति नवीभूतायाः समस्यायाः सृष्टिः। एवं प्राक्तनैः ऋषिभिश्च गवेषणा कृता तत्प्रमाणमस्माकमायुर्वेदशास्त्रमेव। यक्ष्मरोगाधिकारे सुश्रुतेनोक्तम्।

'उपाचरेदात्मवन्तं दीप्ताग्निमकृशं नरम्।' ये रोगिणो जितेन्द्रिया येषाम् अग्निरुद्दीप्तः कायेनाकृशाश्च तेषामेव चिकित्सा कर्तव्या। वस्तुतो ये रोगेण सह संग्रामं कर्त्तुं शक्नुवन्ति तेषां रोगोपशमश्चेति। स्नेहपान-वमन-विरेचन-प्रभृतिभिः शरीरं संशोध्य औषधप्रयोगव्यवस्था पूर्वतः कृता, किन्तु अधुना सा विलुप्तप्राया।

( क्रमशः )

---

# कपालकुण्डला-रूपकम्

## पञ्चमोऽङ्कः

### द्वितीयं दृश्यम्

[ नवकुमारगृहसमीपस्थितं वनमध्यगतं भग्नं मन्दिरम् ]

( पूर्वानुवृत्तम् )

मतिः—भगवन् अस्ति मे कपालकुण्डलया सह वैरम्। तद्वैरनिर्यातनाय एव ब्राह्मणवेशं गृहीत्वा सप्तग्रामं प्रति चलितास्मि। सहसास्मिन् विजने वने कपालकुण्डलानामयुक्तं मन्त्रमाकर्ण्य भवत्सकाशमागता। अपि नाम भवान् अपि तस्यां बद्धवैरः ?

कापालिकः—भद्रे, सम्यगभिहितं भवत्या। वैरनिर्यातनायैवाभिचारः क्रियते।

मतिः—( आत्मगतम् ) अहो अनुकूलदैवतया साम्प्रतं पूर्णमिव मे मनोरथं पश्यामि। ( प्रकाशम् ) भगवन् यद्येवं तद् भगवता मम सहायेनात्र भवितव्यम्।

कापालिकः—भद्रे ! किं त्वया काम्यते ?

मतिः—स्वामिना सह कपालकुण्डलायाश्चिरविच्छेदः।

कापालिकः—परं तस्या मृत्युरेव ममाभीष्टः।

मतिः—अहमपि तस्या हितं न काङ्क्षामि। किन्तु तस्या बधो न मे रोचते। यावज्जीवं निर्वासनमेव मे सम्मतम्।

कापालिकः—त्वमतीव मूढ़ासि। भवतु प्रबोधनायैव ते अतिगूढं कमपि वृत्तान्तं कथयिष्यामि। (मनुष्यश्वासशब्दश्रुतिमभिनीय) मनुष्यश्वासशब्द इव श्रूयते। सावधानं बहिर्गत्वा समन्तान्निरीक्ष्य आगच्छ कश्चित् सन्निहितो वर्तते नवेति।

मतिः—(गृहान्निर्गत्य समन्तादवलोक्य सहसोद्गतेन विद्युदालोकेन कपालकुण्डलां दृष्ट्वा सविस्मयम्) कपालकुण्डले! किमर्थं त्वं रात्रौ निविडारण्यमध्ये एकाकिनी समागता?

कपालकुण्डला—अहमपि पृच्छामि—किमर्थं युवां निशीथसमये निविडकानने असन्मन्त्रणां कुर्वाणौ स्थः?

मतिः—अपि श्रुतं त्वया आवयोरालापः?

कपालकुण्डला—नहि।

(मतिः सहसा कपालकुण्डलाया हस्तं गृहीत्वा तस्मात् गृहाद्दूरतरं स्थानं गन्तुमिच्छति। भीता कपालकुण्डला स्वहस्तं मोचयितुं चेष्टते)।

कपालकुण्डला—मुच्यतां मम हस्तः।

मतिः—(कपालकुण्डलायाः कर्णान्तिकं प्राप्य मृदु कथयति) भीरु अलं भयेन। नाहं पुरुषः। (कतिचित् पदानि कपालकुण्डलया सह गत्वा) श्रोतुमिच्छसि किम् आवाभ्यां क्रियमाणां मन्त्रणाम्?

कपालकुण्डला—(साग्रहम्) श्रोष्यामि।

मतिः—तद् यावन्नाहं प्रत्यावर्ते तावदत्रैव प्रतीक्षस्व। (कापालिकसमीपं गच्छति)।

कपालकुण्डला—(आत्मगतम्) यद् दृष्टं यद्वा श्रुतं तत् सर्वमेवोद्वेगजनकम्। तत् किमिदानीं करिष्ये। (ऊर्ध्वमालोक्य) हन्त जलधरपटलसमाच्छन्नमाकाशमण्डलं क्रमशो मसीमयं भवति। मुहुर्मुहुर्गम्भीरमेघध्वनिरशनिसम्पातश्च जायेते। मुहुर्मुहुर्विद्योतते च विद्युत्। तद् द्रुतं स्वगृहमेव यास्यामि। (निष्क्रान्ता)

कापालिकः—( द्रुतं प्रविश्य समन्तादवलोक्य ) हन्त गता कपालकुण्डला । तत् किन्नु खलु करिष्ये ? भवतु दृष्टम् । अनेनैव पथा द्रुतमेनामनुसृत्य स्वाभीष्टसिद्धये कुसुमितवनलतागोपितं लेखमिममस्या गेहे निक्षिपामि ( निष्क्रान्तः )

---

# षष्ठोऽङ्कः

[ नवकुमारस्य कक्षः ]

(गृहकर्मसम्पादनाय कक्षं प्रविशन्ती कपालकुण्डला कुट्टिमोपरि कुसुमितलतान्तरितं लेखं दृष्ट्वा विस्मयात् तमादाय शय्यायामुपविश्य पठित्वा कबरीबन्धे निधाय स्वकार्यं समाप्य च कक्षात् निष्क्रामति । निष्क्रामन्त्याः कपालकुण्डलायाः कबरीबन्धात् कुट्टिमतले पतन्तं लेखं दूरादवलोक्य प्रविशति स्वकक्षं नवकुमारः ) ।

नवकुमारः—( कुट्टिमतलात् लेखमादाय पठति ) "कपालकुण्डले ! ह्यस्तावद् यां वार्तां श्रोतुमैच्छः अद्य किं तां श्रोष्यसि ?" इति ब्राह्मणवेशधारी । (क्षणं विचिन्त्य) को नु खलु एतस्य लेखस्य अर्थः स्यात् ? किं तावत् प्रणयवार्ता ? अपि नाम ब्राह्मणवेशधारी प्रणयभाक् कपालकुण्डलायाः ? पूर्वमपि पापीयसी विषयविशेषेषु स्वतन्त्रैवासीत् । निशीथसमयेऽपि ममादेशमुल्लङ्घ्य एकाकिनी वनमभ्रमत् ।

( क्रमशः )

---

# स्वागतसम्भाषणम्

श्रीश्रीतारकेश्वरसंस्कृतराष्ट्रभाषासम्मेलने स्वागतसभाध्यक्षाणां महामहोपाध्यायश्रीकालीपदतर्काचार्यमहोदयानाम्

निबन्धकः—श्रीकालीपदतर्काचार्यः

ॐ नमो भगवते श्रीश्रीतारकेश्वराय। समवेताः प्रियाः पारिषदाः! अद्य महामहिम्नि सर्वतो विश्वं सुविश्रुतनाम्नि श्रीतारकेश्वरशङ्करेणाधिष्ठिते पुण्यतीर्थे तारकेश्वरधाम्नि प्रवर्तमाने संस्कृतराष्ट्रभाषासम्मेलने समुपेक्ष्य नित्यं कृत्यजातं, अगणयित्वा क्लेशपरम्पराम् गीर्वाणवाणीप्रणयेन साग्रहमुपगतानां भवतां पुरतः प्रथमतः प्रणिपत्य प्रत्यासत्तिमन्तमनाद्यन्तं भगवन्तं तारकेश्वरं, समभिवाद्य विद्यातपोवृद्धमवृद्धमपि वयसा तारकेश्वरपुण्यतीर्थगुरुं, वेदयित्वा प्रीत्या प्रणयोचितं परिष्वङ्गम् सर्वेषाम् अभिनन्दामः स्वागतं भवताम्। बहोः कालात् प्रभृत्येव विविधकारणसन्निपातेन प्रवृत्ते सर्वतो विश्वं विश्वमानसमुचितायाः सुरसरस्वत्याः प्राचीनयुगोपार्जितमानादिमहैश्वर्यविपर्यये भारतीयसंविधानादिना निवेद्यमाने प्रादेशिकभाषान्तरसम्माने प्रस्तूयमाने च कतिपयैरन्यैः सुचिराय वैदेशिकभाषाधिकारे नैराश्यभयवश्यतादिदोषमंशतोऽप्यनाश्रयन्तो यद् भवन्तः सम्मेलनसाफल्यमुपपादयितुमभ्युपेताः तदिदमतिमात्रमाशास्थानमत्यानन्दनिदानञ्चास्माकमित्यत्र किंवा बहु वक्तव्यम्। सौभाग्योपनतं भवतामिदं स्वागतं सुतरां सफलमास्तामिति श्रीभगवन्तमर्थयामहे।

श्रद्धेयाः! पारिषदाः! सुविदितमेवैतद् भवतां यत् यदिदं वयं भारतराष्ट्रमधिवसामः, तत्र विभिन्नेषु कालेषु विभिन्ना नायकाः समजायन्त। तत्र तत्र विभिन्ना समवर्त्तत नीतिः शासनिकी। विभिन्ना च तत्र तत्र प्राचरद् भारतराष्ट्रकृत्योपयोगिनी भाषा, यया सर्वप्रकृतिपरिगृहीतया निर्वर्त्तितान्यभूवन्नखिलान्येव राष्ट्रकृत्यानि। सेयं प्राक्तने प्रसरति छात्रप्रभृतिभारतीयशासने

प्रायेण सुरसरस्वत्येवेति सोपपत्तिकः सिद्धान्तः। तथाहि यदा या भाषा राष्ट्रभाषा भवति, तयैव भाषया नियतं राष्ट्रकृत्योपयोगीन्यर्थशास्त्रादीनि प्रवर्त्तन्ते, तत्रैव च सुनिष्णाता राष्ट्राधिकारिणो राष्ट्रकृत्येषु तान्यवलम्बमानाः प्रवर्त्तन्ते, यदि तानि राष्ट्भाषाव्यतिरिक्तया भाषया निबध्येरन्नफलस्तर्हि निबन्धस्तेषाम्, दृश्यन्ते च मनुयाज्ञवल्क्यशुक्रचाणक्यकामन्दकीयाद्यर्थशास्त्राणि निबद्धानि संस्कृतवाङ्मयेनैव नत्वपरेण वाङ्मयेन, तान्येव च तदानीमुपायुज्यन्त प्रतिपदं राष्ट्रादिकृत्यकलापेषु नियमेन। तत्प्राचीने काले भारते वर्षे संस्कृतभाषैव राष्ट्रभाषासीदिति सर्वथा सोपपत्तिकं वचनम्। समाजेऽपि तदानीन्तने भूयानेवास्याः समवर्त्तताधिकार इत्यपि शक्यं निश्चयेनैव समभिधातुम्। कुत इति चेत्, दृश्यतां सावधानम्, सन्ति जनसमाजस्य क्षेममक्षयमुपक्षिपन्तः प्रतिपक्षभूतमक्षेमञ्च क्षपयन्तः समाजनीतिग्रन्थाः संस्कृतमया धर्मनीत्यादिग्रन्थाश्च संख्यातीताः। त एते प्रवृत्ताः कस्य हेतोः? जनसमाजोपदेशायेति चेत्, तदुपदेशार्थमुद्दिष्टेन जनसमाजेन संस्कृतवाङ्मयविदुषा भाव्यम्। यः खलु जनसमाजो यस्यां भाषायामनिष्णातस्तया भाषया तस्योपदेशो नितरामफलो भवति, नह्यफला प्रवृत्तिः प्रेक्षावताम्। तदमुना संस्कृतवाङ्मयेनैव प्रेक्षावतामृषिप्रमुखानां समाजसुहृदां समाजोपदेशेन समाजेष्वपि प्रतिपद्यते तदानीं प्रचरद्रूपतेति स्थितम्। दृश्यतामन्यदपि, राष्ट्रं हि नाम प्रत्येकं प्रत्यहं अनन्तरराष्ट्रभूपालादयो बलात्कारेण अभिगृह्णन्ति, तदपोहनाय समपेक्षितः संग्रामः, सोऽयं सुतरामपेक्षते सांग्रामिकीं विद्याम्। सा च यं धनुर्वेदमभिनिविशते सोऽपि संस्कृतवाङ्मयनिबद्ध इति तदानीं तदर्थमप्युपायुज्यत राष्ट्रे विशेषतो विज्ञानं सुरसरस्वत्याः।

एवमेव विश्वोपकृतिसाधनीभूतसत्वादिविधिविज्ञानाय परमपुरुषार्थहेतुभूततत्त्वविनिर्णयाय च वेदवेदान्तादिशास्त्राणि, धर्मपरिज्ञानाय स्मृतिशास्त्रं, पुराणेतिवृत्तादिप्रतिपत्तये पुराणेतिहासादिकं, तान्त्रिकगत्या मन्त्रादिसाधनया सिद्धिलाभाय तन्त्रशास्त्रम्, कृत्योपयोगिकालकलादिप्रतिपत्त्यर्थं ज्योतिषशास्त्रम्, तत्तच्छास्त्रीयवाक्यार्थबोधानुकूलविभक्त्यर्थादिबोधाय व्याकरणशास्त्रम्, सङ्गीत-

कलावगमाय सङ्गीतशास्त्रम्, अभिनयनृत्यकलादिप्रतिपत्तये भरतादिनाट्यशास्त्रम्, कामकलाविज्ञानाय वात्स्यायनादिकामशास्त्रं, शारीरदोषत्रयसाम्यसाधनचिकित्सा-पद्धतिविनिश्चयार्थमायुर्वेदशास्त्रम्, चित्तविनोदनाय व्यवहारविज्ञानादिफलस्तोमाय च साहित्यशास्त्रं, परपक्षप्रतिक्षेपाय स्वपक्षप्रतिष्ठापनाय च न्यायवैशेषिकादि-युक्तिशास्त्रम्, विशुद्धवर्णोच्चारणपद्धतिबुद्धिसन्धानाय शिक्षाशास्त्रं, यज्ञीय-होमकुण्डादिनिर्माणवैचक्षण्याय कल्पशास्त्रं, छन्दःप्रतिपत्तये छन्दःशास्त्रं, प्रासादादिनिर्माणशिक्षणार्थं शिल्पशास्त्रम्, तदेतत् सर्वं पूर्वमुपजीवति स्म दवीमेव वाणीं, नान्याम्। ततस्तदानीं तद्बोधमन्तरेण विपर्यस्तः पूर्वोक्त-फलस्तोमलाभः। एतेन प्रायः सर्वेषामेव तत्तद्विशेषफलकामिनां समाजस्य सिद्धं सुरसरस्वत्यां वैदुष्यं विशेषतः समपेक्षा च तस्याः।

(क्रमशः)

---

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

श्रीचैतन्यचरितामृते मध्यलीलायां

द्वितीयः परिच्छेदः

(पूर्वानुवृत्तः)

त्वं मे नेत्राभिरामस्त्वमसि मम धनं जीवनं त्वं शरीरे।
हा हा नाथ प्रिय त्वं वितर पुनरपि प्रेक्षणं वारमेकम् ॥६२

स्तम्भः कम्पोऽश्रु वैवर्ण्यं प्रस्वेदः स्वरभेदनम्।
रोमाञ्चाश्च प्रभोर्देहं परितो व्याप्नुवंस्तदा ॥६३

नृत्यन् गायन् हसन् क्रन्दन्नुत्तिष्ठन्नभितो द्रवन्।
निपतंश्च क्षणेनैव मूर्च्छितोऽभून्महाप्रभुः ॥६४

साक्षात्कारञ्च मूर्छायां लब्ध्वोत्थाय च तत्क्षणात् ।
सहुङ्कारमुवाचासौ भद्र स्वागतमस्त्विति ॥६५
कृष्णमाधुर्यसम्पद्भिर्नानाभ्रान्तिचलन्मनाः ।
श्लोकमेवं पठित्वासौ निश्चिकाय महाप्रभुः ॥६६

"तथाहि श्रीकृष्णकर्णामृतेऽष्टषष्टितमः श्लोकः—

मारः स्वयं नु मधुरद्युति मण्डलं नु
माधुर्यमेव नु मनोनयनामृतं नु ।
वेणीमृजो नु मम जीवितवल्लभो नु
कृष्णोऽयमभ्युदयते मम लोचनाय ॥११

यथा रागः ।"

कामः साक्षात् किमयमथवा मूर्तिमान् कान्तिविम्बः
साक्षान्मूर्तः किमु मधुरिमा चित्तनेत्रोत्सवो मे ।
प्राणारामो हृदयरमणः किं मम प्राणकान्तो
नेत्रानन्दं मम वितरितुं सत्यकृष्णः समेतः ॥६७
एवं भावगणो नाट्यगुरुर्विविधरीतिभिः ।
अनर्तयत् सदा शिष्यौ मनःकायौ महाप्रभोः ॥६८
निर्वेदेन विषादेन दैन्येन चापलेन च ।
मन्युप्रहर्षधैर्यैश्च नृत्यैः कालोऽगमत् प्रभोः ॥६९
स गीतिं चण्डिदासस्य कवेर्विद्यापतेस्तथा ।
कर्णामृतं तथा गीतगोविन्दं रायनाटकम् ॥७०
रामानन्दस्वरूपाभ्यां सह रात्रिन्दिवं प्रभुः ।
अगायत् परमान्दनिर्वृतः श्रुतवान् पुनः ॥७१
रामानन्दस्य सख्यञ्च पुर्यां वत्सलता तथा ।
गोविन्दप्रमुखाणाञ्च शुद्धदास्यरसः पुनः ॥७२

(क्रमशः)

---

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharys—Edited by Pt. Bamacharan Kvyatirtha. As. 12 ; As. 10. (for membera).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. Re. 1-8 ; Re, 1-4 ( for members ).

14. **Nala-damayantlyam** ( a new Drama ) of MM, Kalipada Tarkacharya. Rs. 1-8 ; Rs. 2 ( for members ).

15. **Prashastapada-bhashyam**—Edited by MM, Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members)

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2 ; Re. 1-8 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr, Pashupatinath Shastri M. A,, B. L., Ph. D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs 5 ; Rs. 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM Kalipada Tarkacharya. Rs. 7 ; 6 ( for members).

21 **Manodutam** of Vishnudasa—Ed. by prof. Chintaharana Chakravarti. M. A. Re. 1-4 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs, 2 ; Re. 1-8 ( for members).

23. **Devisatakam** of Mahmahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., As. 8.

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kali pada Tarkacharya, Rs. 5 ; Rs. 4-8 ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re. 1-8 ; Re. 1-4 ( for members ).

---

## अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनस्य

# आवेदनम्

अखिलभारतसम्मानिता संस्कृतभाषा यथा भारतराष्ट्रस्य राजभाषात्वेन परिगणिता स्यात् तदर्थं १९५८ खृष्टाब्दीये मे-मासे युगाचार्य-श्रीश्रीसीताराम-दासोङ्कारनाथचरणानां प्रधानाध्यक्षेण कलिकातामहानगर्यामेकमखिलभारतीय-संस्कृतराष्ट्रभाषासम्मेलनमनुष्ठितम्। तत्र तदीयोद्देश्यसाधनाय काचित् साधारणपरिषत् काचित् कार्यनिर्वाहकपरिषच्च सुसंघटिते। तत्र तत्र सर्वेषां भारतहितैषिणां यथासम्भवं सदस्यपदाधिकारेण सर्वथा साहायकविनियोगः सम्प्रार्थ्यते।

तत्र साधारणसदस्यपदाधिकाराय प्रतिवर्षमेकं रूप्यकं कार्यनिर्वाहकसदस्य-पदाधिकाराय च रूप्यकत्रयं सम्पादकसविधे दातव्यम्।

विनीत—

स्थानसङ्केत :— श्रीनिर्मलचन्द्रदासगुप्त-

३नं शम्भुनाथपण्डित ष्ट्रीट् श्रीनगेन्द्रनारायणचतुर्धुरीणयोः

कलिकाता-२० सम्पादकयोः

## तत्र विशिष्टकर्माध्यक्षाः :—

पूज्यपाद—श्रीश्रीसीतारामदासोङ्कारनाथमहाराजः ( सभापतिः )

डाः—श्रीनलिनीरञ्जनसेनगुप्त एम-डि महोदयः ( कार्यनिर्वाहकसभापतिः )

विचारपति—श्रीरमाप्रसादमुखोपाध्याय एम् ए. बि-एल् ( पृष्ठपोषकः )

श्रीश्रीजीवन्यायतीर्थ—श्रीचपलाकान्तभट्टाचार्य एम्-ए—श्रीवसन्तकुमार-चट्टोपाध्याय एम्-ए प्रमुखाः ( सहसभापतयः )। उक्तौ सम्पादकौ च।

Reg. No. C 1073

Vol. XXXXI. October 1958

No. 6 १८८० शकीये

४१श-वर्षस्य आश्विने

६ष्ठ-संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री-काव्य-व्याकरण-पुराणतीर्थश्च



संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—1-4d

# Sanskrit Sahitya Parishat Series

( Revised up to December, 1957 )

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chandra Siddhantabhushana. Re. 1-4; *Re*. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan. Bhattacharya. (Out of stoek.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacbarya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Re. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. (*for* members). Rs. 2. 8 ; Rs. 2.

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8. Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri- As. 4.

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Sbastri, M. A', B. L. Ph, D. Re. 1-8 ; Re. 1-4. ( for members ).

10. **Grahayaga-tattvam** of Raghunandana Bhaṭtacharya—Edited by Pt. Satish Chandra Siddhantabhushana. As, 14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharys—Edited by Pt, Bamacharan Kvyatirtha. As. 12 ; As. 10. (for membera).

इयं संस्कृत-साहित्य-परिषत् प्रतिभा-रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

| | | | |
|---|---|---|---|
| Vol. XXXXI. | १८८०-शकीये आश्विने | October |
| No. 6 | ४१श-वर्षस्य ६ष्ठ-संख्या | 1958. |

## मतिमञ्जरी

### शक्ति-पूजा

निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः

यः शैवैरुपगीयते पशुपतिः शाक्तैश्च शक्तिः परा
गायत्रीश्रुतिशास्त्रमानगुरुभिः सौरैस्तु सप्ताश्वकः ।
विघ्नानां परिनाशको गणपतिर्यो गाणपत्यैः स्तुतो
रामो वा पुरुषोत्तमः स कृपया क्षेमं सदा यच्छतात् ॥

शैव-शाक्त-सौर-वैष्णव-गाणपत्य-भेदभिन्नेषु भारतीयपञ्चदेवतोपासक-सम्प्रदायेषु प्रायः शाक्तवैष्णवयोः प्राधान्यमुपलभ्यते मतवैषम्यञ्च । तदेतन्मत-वैषम्य-दूरीकरणायाचार्यः शङ्करोऽद्वैतवादं प्रख्यापयामास तदप्याचार्यो रामानुजो नाभिनन्दितवान् । एवं वादवैषम्येन विवादोऽपि प्रायः प्रचलति सृष्टेरारभ्य । वस्तुतत्त्वविचारणे वनवृक्षयोर्वृक्षतदवयवयोर्वा भेदाभेदवत् शक्तिशक्तिमतो-र्भेदेनाभेदेन वा परिचर्या जडैरपि क्रियामाणा दरीदृश्यते । किं बहुना परमाणु-

रपि परमाण्वन्तरसंयोगेन विना नानुभवयोगयोग्योन्मुखो भवति। एवं च सति यद्यपि नास्ते विरोधावसरस्तथाप्यज्ञाततत्त्वनिबन्धनेयं भ्रान्तिरासंसारं स्थास्यत्येव। तत्तदर्चादिष्वनुरागविशेषवशादर्चान्तरेषु तुल्यसमादरो नैव जायत इति हि वस्तुस्थितिर्विशेषस्य विशेषान्तरप्रतिपन्नत्वात्। आर्यैरार्षज्ञानविभूति-समृद्धैरा कीटेभ्यः सर्वत्रैवैकस्य भगवतः सत्तामनुभूय तदनुभावयितुमुपदेशो दत्तः शिष्येभ्यः। ग्रहणतारतम्यात् सुतरां दृष्टितारतम्यं जातम्। शास्त्र-व्यवहारेष्वपि—

यः कृष्णः सैव दुर्गा स्याद् या दुर्गा कृष्ण एव सः।
उभयोरन्तरादर्शी नरकान्न निवर्तते॥

इति ब्रह्मसंहिताटीकायां श्रीमज्जीवगोस्वामिपादधृतवचनं तथा सप्तशत्यां—

"त्वं वैष्णवी शक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया"इतिवाक्यञ्चास्माकं सिद्धान्तमनुवदति द्रढयति च।

अत एव महाप्रभुसम्प्रदायैरचिन्त्यभेदाभेदवादश्चिन्तितः। श्रीश्रीचैतन्य-चरितामृतेऽपि यत्र यत्र पतत्यक्षि कृष्णस्तत्रैव संस्फुरेदिति सर्वत्रैवोच्चावचेषु कृष्णस्फूर्तिः प्रतिपादिता। अपि च कृष्णमन्त्रस्याधिष्ठातृदेवतारूपेण दुर्गा-त्रिपुरासुन्दरीप्रभृतयः संदृश्यन्ते। सुतरां ह्लादिनी शक्तिर्या राधिकेति विख्याता सैव साधकान्तरैः काली-तारा-दुर्गा-हैमवती "राधा वृन्दावने वने" इत्यादि-स्तोत्रादिसूक्तैः नामभिर्व्यपदिश्यन्ते। साधनमार्गप्रविविक्षूणामेकत्रैवाभीप्सित-दर्शनं न वैदुष्यं विघटयति तदानीं चित्तस्य क्षिप्तादिषु भूमिष्ववस्थानात्। ततश्चारुन्धतीन्यायेन तत्त्वज्ञानं यथा समुत्पाद्येत तदर्थं निदिध्यासनं विधेयमेव। उपासनाराज्यं स्वतन्त्रमेव बाह्यतो राष्ट्रात्। न तत्राणविकास्त्र-भयं न परराज्यग्रहणलिप्सादयः। स्वभावचञ्चलस्य चित्तस्याभिमतध्यानद्वारा स्थिरीकरणेन राष्ट्रं तत् सार्वभौमं सुप्रतिष्ठितं भवेत्। अभिमतध्यानञ्च न सम्भवति साकारचिन्तनं विना;—अतएवाद्वैततत्त्वज्ञैरपि श्रीमन्मधुसूदन-सरस्वतीपादैः

ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते ।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनेषु यत् किमपि तन्नीलं तमो धावति ॥

इत्युक्तं गीताव्याख्यानावसरे । "निराकारं परं ज्योतिर्निराकारेण दृश्यते"। इत्यादिना गुरावपि भगवद्दर्शनं विहितम् । शास्त्रगहनपर्यटनं नात्र सम्भविष्यतीति कुशलैस्तत्र तत्रानुसन्धेयम् । सर्वथा यथा वयं सर्वत्र विद्वेषशून्या भवेम तदर्थं साधना प्रकर्तव्यास्माभिः । केवलेनोपदेशप्रदानेन जगतः शान्तिर्न सुप्रतिष्ठिता भविता । आधुनिकेऽशान्ते युगे सर्वत्र विजयैषिण्यां धरण्यामनुष्ठानेन शास्त्राचारः प्रदर्शनीयस्तथा यथा सर्वे उच्छृङ्खलास्तत्र तत्र मोदमानास्तत्तच्छास्त्रीयाचारमन्ततोऽंशतोऽनुतिष्ठेयुः । शास्त्रशरणं विना यतो जगतः कल्याणं न सम्भविष्यत्यतः शास्त्राचारपरिपालकैरपि मिथ्याचारपरिहारपूर्वकं शास्त्रानुशीलनं शास्त्रोपदेशानुष्ठानं शाक्तवैष्णवादिभेदकलहं प्रविहाय च प्रकर्तव्यम् । वाह्यराज्ये शान्तिस्थापनार्थमान्तरराज्ये शान्तिप्रतिष्ठा प्राक् प्रकर्तव्या अतएव साधकोत्तमानां वसुमतीरक्षणार्थं यत् कर्तव्यमस्ति तन्न विस्मर्तव्यमस्मिन् सङ्कटे काले । परस्परविद्वेषभावं दूरीकृत्यैकमत्येनाशान्तस्य जगतः शान्तिप्रतिष्ठा तैरेव कर्तव्यान्यथा तेऽपि प्रत्यवायभागिनः स्युः । न विस्मर्तव्यं शक्तिपूजा दुर्वलैर्न कर्तुं युज्यते । विद्वेषश्चान्तरराज्ये दौर्बल्यमुपजनयति । अतः शक्तिलाभार्थं वैष्णवी शक्तिर्वा शक्त्यन्तरं वाभेदेन समाश्रयणीयमिति दिक् ।

---

# कुर्वन्नेवेह कर्माणि

निबन्धकः—श्रीदीननाथत्रिपाठी तर्कवेदान्ततीर्थः

'ईशावास्यमि'त्यादिवाजसनेयसंहितोपनिषदि 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥' इति मन्त्रो द्वितीयत्वेनोपन्यस्तः।

भगवच्छङ्करपादानां मते एतस्यार्थस्तु संक्षेपतो यथाः—अग्निहोत्रादीनि शास्त्रविहितानि कर्माणि कुर्वन्नेवेह मनुष्यलोके शतं वत्सरान् जीवितुमिच्छेत्। एवं-प्रकारेण जीवितुमिच्छति मनुष्याभिमानिनि त्वयि, शास्त्रविहितकर्मानुष्ठान-पूर्वककालातिपातं कुर्वतोऽन्यथा प्रकारान्तरं नास्ति येनाशुभेन कर्मणा न लिप्येतेति! अस्मान्मन्त्रात् पूर्वो मन्त्र 'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां-जगदि'त्यादिः। शुद्धान्तःकरणैर्विविदिषुभिर्विद्वद्भिर्वा सर्वकर्मसंन्यासपूर्वकात्मै-कत्वभावना कर्तव्येति प्रथममन्त्रस्याभिप्रायः। अशुद्धान्तःकरणानतएवात्म-तत्त्वविचारेऽसमर्थान् प्रति 'कुर्वन्नेवेहे'त्याद्युपदेशः।

अत्रायं विमर्शो भवति—'कुर्वन्नेवेहे'त्यादिना किं सकामानां शास्त्रोक्त-कर्मोपदेशो निष्कामानां वेति। तत्र केचिद् ब्रुवन्ति—निष्कामानामेवायमुप-देश इति। ते खल्वस्य संवादकत्वेन 'असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः! नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥' [ गीः १८।४९ ] 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च। कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥' [ गीः १८।६ ] इत्यादि भगवद्वाक्यं प्रमाणयन्ति। एवं निष्कामकर्म समाचरन् मनुष्यः पापपुण्यात्मककर्मणा न लिप्यते। निष्कामकर्मणामाशय-शुद्ध्याधायकत्वेन पापपुण्यजनकत्वाभावात्। पुण्यस्यापि स्वर्गभोगाद्यनुकूलत्वेन ज्ञानोपयोगिचित्तशुद्ध्याधायकत्वाभावादिति।

अन्ये त्वाहुः—'कुर्वन्नेवे'त्यत्र सकामानामेव कर्मोपदेशो जिजीविषेदिति-कामवाचकपदसमभिव्याहारात्। न हि निष्कामाणां विविदिषां विद्यां वाऽन्तरेण

कामान्तरं भवितुं युक्तम्। 'तमेतमात्मानं विविदिषन्ति ब्राह्मणा यज्ञेने'त्यादि-श्रुतो विविदिषार्थं विद्यार्थं वा निष्कामाणां कर्मोपदेशात्। किञ्चास्या उपनिषदोऽन्ते 'हिरन्मयेन पात्रणे'त्याद्यैर्मन्त्रैः कामिनोमृत्युकालेऽर्चिरादिमार्गेण ब्रह्मलोकप्राप्तेः प्रार्थनमुपदिष्टम्। तदपि निष्कामाणां न सम्भवति। तस्मात् 'कुर्वन्नेवे'त्यादिना सकामकर्मोपदेश एवेति।

अत्रोच्यते—'कुर्वन्नेवेहे'त्यत्र न सकामानामेव न वा निष्कामाणामेव कर्मोपदेशः' किन्त्वात्मतत्त्वविचारासमर्थानां सर्वेषामेव सामान्यतः कर्मनिष्ठोपदेशः। तत्र ये मुमुक्षवोऽपि ब्रह्मात्मैकत्वविषयकविचारेऽसमर्थास्ते फलानुसन्धानपरित्यागेन शास्त्रविहित्तानि कर्माणि कुर्वन्त एव जीवितुमिच्छेयुः। एवं कृतेऽशुभेन पापात्मकेन कर्मणा न लिप्यन्ते न बध्यन्ते। निष्कामकर्मणामुपात्तदुरितक्षयहेतुत्वात्। उक्तं च भगवताऽर्जुनाय 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' [ गाः २।३९ ] इत्यत्र। मधुसूदनसरस्वतीपादैरप्येतच्छ्लोकव्याख्यानावसरे 'कर्मनिमित्तो ज्ञानप्रतिबन्धः कर्मणैव धर्माख्येनापनेतुं शक्यत' इत्यादि ग्रन्थेन निष्कामकर्मरूपधर्मस्य पापनाशकत्वं स्पष्टमुक्तम्। न च जिजीविषेदिति कामसंयोगवचनात् कथं निष्कामाणां कर्मोपदेश इति वाच्यम्। प्रारब्धकर्माक्षिप्ततया भोजनेच्छादिवद् जीवनेच्छाया अपि स्वतःप्राप्तत्वम् नत्वागन्तुकत्वमिति शास्त्रमनुवदति।

ये तु प्रबलकामनावशीकृतात्मानो विक्षिप्तचित्ता अमुमुक्षवस्तेऽपि कामनापुरःसरं नित्यनैमित्तिकानि कर्माणि काम्यान्यपि शास्त्रविहितानि कृत्वा जिजीविषेयुरन्यथा स्वाभाविकेन निषिद्धेन च कर्मणा कष्टतरामधोगतिं यास्यन्तीति करुणापरवशया श्रुत्या तादृशा अपि मनुष्या रक्षिता इति भावः।

( क्रमशः )

---

# कपालकुण्डला-रूपकम्

## षष्ठोऽङ्कः

### द्वितीयं दृश्यम्

[ नवकुमारस्य कक्षः ]

( पूर्वानुवृत्तम् )

तथापि— सन्देहेन कृतेनास्यां ध्वंसेत हृदयं मम
अत एव न सन्देहः सुदृढं परिपोषितः ॥

परं नायमद्य सन्देहः। निश्चय एव समुपस्थितः। ( निःशब्दं रुदित्वा कथञ्चित् स्थैर्यमासाद्य ) कथं कपालकुण्डला अपि मयि विश्वासघातिनी ! ( पुनरपि रुदित्वा स्थैर्यमादाय ) नाहं तां भर्त्सयिष्यामि। प्राणात्ययेऽपि न तां किमपि वक्ष्ये। प्रच्छन्नस्तामनुसृत्य प्रत्यक्षीकृत्य च तस्याः पापकृत्यम् स्वजीवनमेव परित्यजेयम्। (नेपथ्याभिमुखं विलोक्य आयान्तीं कपालकुण्डलां दृष्ट्वा), अये मन्ये सैषा पापीयसी लेखस्यैवान्वेषणाय इत एव आगच्छति। तत् प्रच्छन्नो भूत्वा पापीयस्या निर्गमनं प्रतीक्ष्य द्वारं प्रति दृष्टिं नियोजयामि।

( प्रच्छन्नस्तिष्ठति )

कपालकुण्डला—(लेखान्वेषणं कुर्वती प्रविश्य) हा धिक् कवरीबन्धात् प्रभ्रष्टो मे लेखः। ( समन्तादन्विष्य सखेदम् ) हन्त, न कुत्रापि दृश्यते स लेखः। (क्षणं विचिन्त्य) मन्ये पूर्वसमागमस्थान एव दर्शनं भविष्यति। तत् तत्रैव गच्छामि।

नवकुमारः—( वहिरागत्य कपालकुण्डलागमनपथे दृष्टिं निधाय ) निर्गता कपालकुण्डला। यावदहमपि दूरत एवनामनुसरामि। ( कपाल-

कुण्डलामनुसर्तुकामे नवकुमारे कापालिकः सहसा प्रविश्य तदग्रतस्तिष्ठति नवकुमारस्तस्य वक्षोहस्तेन सन्ताड्य तं चालयितुमशक्तः) कस्त्वम् ?

कापालिकः—किं नाभिजानासि माम् ?

नवकुमारः—( कापालिकमभिज्ञाय सहर्षम् ) किं कपालकुण्डला भवद्दर्शनाय निर्गता ।

कापालिकः—नहि ।

नवकुमारः—(विषण्णः) तत् पन्थानं मे मोचय ।

कापालिकः—मोचयामि । परं त्वया सह मम कापि कथा वर्तते ।

नवकुमारः—मया सह तव का नाम कथा? किं मम प्राणनाशाय पुनरागतोऽसि? नाशय माम् । सम्प्रति नाहं ते कामपि बाधां जनयिष्यामि । कापालिक ! मयि विश्वासं स्थापय । अहमात्मानं ते समर्पयामि ।

कापालिकः—नाहं तव प्राणनाशाय आगतः । नैषा भवान्या इच्छा । यदर्थमागतोऽहं तत् तवापि अभिप्रेतं भविष्यति । गृहाभ्यन्तरमागच्छ ।

नवकुमारः—न पुनरिदानीम् । समयान्तरे श्रोष्यामि । प्रयोजनान्तरं मां इदानीं बाधते ।

कापालिकः—वत्स ! तां पापिष्ठां त्वमनुसरसि? तस्या गमनस्थानम् अहं जाने । अहमेव त्वां तत्र नेष्यामि । द्रष्टव्यं त्वां अवश्यमेव दर्शयिष्ये ! सावधानं श्रूयतां मे वचनम् ।

नवकुमारः—न विद्यते इदानीं त्वत्तो मम कापि भीतिः । आगच्छ । (कक्षाभ्यन्तरं प्रविश्य कापालिकेन समम् आसने उपविश्य ) कथ्यताम् ।

कापालिकः—वत्स ! पश्य मम बाहुद्वयम् । यस्यामेव रजन्यां त्वं कपालकुण्डलया सह पलायितस्तस्यामेव रजन्यां युवयोरन्वेषणक्रमेण वालुकापर्वतशिखरात् पतितस्य मे बाहुद्वयं भग्नम् अचेतनश्चास्मि अभवम् । अचेतन एव कश्चित् स्वप्नमपश्यम् । स्वप्ने भवानी ( रोमाञ्चं नाटयन् ) —भवानी मे प्रत्यक्षीभूता भ्रूभङ्गेन मां निभर्त्स्य अब्रवीत्—"रे दुराचार ! कपालकुण्डलामधिकृत्य तव कामप्रभवचित्ताशुद्धिरेव मम

पूजाया विघ्नमजनयत्। तत् वलिरूपेण कपालकुण्डलायाश्छेदन-मेवास्य केवलं प्रायश्चित्तम्। कालेन विगतरोगेणापि मया न तद् आत्मना साधयितुं शक्यते। वत्स! कपालकुण्डला मे वधार्हा। सा तवापि विश्वासघातिनी अतस्त्वयापि वध्या। हस्तद्वयं मे भग्नम्, तत् त्वं मम सहायो भव। विश्वासघातिनीं समादाय ममानुसरण-क्रमेण यज्ञस्थलं प्रापय। अनेन कर्मणा भवानीसमीपे त्वत्कृतस्या-पराधस्य प्रायश्चित्तं भवेत्—पुण्येन कर्मणा ते अक्षय्यं सुकृतं स्यात्—कुचरित्राया न्याय्यो दण्डो भविता—प्रतिहिंसा च परां काष्ठां गच्छेत्? वत्स अलं विलम्बेन शीघ्रं माम् अनुसर। यद् द्रष्टव्यं तत् त्वां दर्शयिष्यामि।

(निष्कान्तः कापालिकेन सह घर्माक्तकलेवरो विह्वलो नवकुमारः)

---

# सप्तमोऽङ्कः

## प्रथमं दृश्यम्

[ वनमध्यस्थितं भग्नमन्दिरम् ]

(ततः प्रविशति कपालकुण्डलया सहालपन्ती ब्राह्मणवेशधारिणी मतिः)

मतिः—स्मरसि किं हिज्लिप्रदेशादागमनसमये पथि मिलितां कामपि यवन-कन्यकाम्?

कपालकुण्डला—स्मरामि। यया मह्यमलङ्कारजातं प्रदत्तम्।

मतिः—सा एवाहम्। (कपालकुण्डला विस्मयं नाटयति) कथं विस्मितासि? विद्धि मां तव सपत्नीम् रामगोविन्दघोषालस्य कन्यकां पद्मावतीम्।

कपालकुण्डला—तत् कथं त्वया छद्मवेशः परिगृहीतः?

मतिः—त्वया सह स्वामिनश्चिरविच्छेदं जनयितुम्। परमिदानीं मया परित्यक्तः स पन्थाः। तदलमनया कथया। साम्प्रतं मद्बुद्धिमाश्रित्य चलसि चेत् मङ्गलं ते भविष्यति ममापि कामनासिद्धिः।

कपालकुण्डला—श्रुतं त्वया कस्य नामधेयं होमकारिणो मुखात्?

मतिः—तवैव। त्वदनिष्टसाधनमेव होमप्रयोजनम्। तव मृत्युरेव तस्याभीष्टः। परं नासीत् मे तत्र सम्मतिः। मन्ये त्वयापि तत्र गत्वा एतदेव श्रुतम्।

कपालकुण्डला—अहमपि तादृशमेव वितर्कमश्रौषम्।

मतिः—जानासि किं कोऽयं होमकारी?

कपालकुण्डला—मम पूर्वपालकः कापालिकः।

मतिः—सत्यं स एव। भवान्यादेशेन तव छेदनमेव तस्याभिप्रेतम्। तत् यदि जीवितुमिच्छसि तदा मद्वचनमनुसर।

कपालकुण्डला—कथ्यतां किं मया करणीयम्?

मतिः—स्वामिनं ते परित्यज। जीवनं मे रक्ष।

कपालकुण्डला—स्वामिनं परित्यज्य कुत्र गच्छामि?

मतिः—दूरतरे प्रदेशे। तुभ्यमहं अट्टालिकां धनानि दासान् दासीश्च दास्यामि। त्वं राज्ञीव स्थास्यसि।

कपालकुण्डला—( आत्मगतम् ) अहो शून्यमिव मे सर्वं जगत् प्रतिभाति। कथमहमस्याः सुखस्य पन्थानम् अवरुन्ध्याम्। वनविहारिणी एव आसम् वनविहारिणी एव भविष्यामि। ( प्रकाशम् ) त्वया मम उपकारः साधितो नवेति मया ज्ञातुं न शक्यते। तथापि कथमहं तव सुखस्य पन्थानमवरुन्ध्याम्। नास्ति से अट्टालिकादासदासीभिः प्रयोजनम्। श्वः प्रभृति अस्याः विघ्नकारिण्याः प्रवृत्तिं न लभेथाः।

मतिः—भगिनि! आयुष्मती भव। त्वया मम जीवनं रक्षितमतस्त्वमनाथेव गन्तुं न शक्नुयाः। श्वः प्रभाते कामपि दासीं त्वत्समीपे प्रेषयिष्यामि। तया सह त्वं वर्धमानं गच्छेः। तत्र मम कापि सखी वर्तते सा तव सर्वमेव प्रयोजनं साधयिष्यति।

२

( ततः प्रविश्य कापालिकेन सह नवकुमारः प्रच्छन्नस्तिष्ठति कापालिकश्च दूरादेव ब्राह्मणवेशधारिण्या समं निरन्तरमुपविष्टां कपालकुण्डलां दर्शयति )

कापालिकः—वत्स पश्य पश्य पापीयस्या आचरणम्। केशपाशोऽस्याः ब्राह्मणकुमारस्य पृष्ठदेशमासाद्य तस्यैव अंसविलम्बि-केशकलापेन सह मिलितः। ( दृष्ट्वा विवशो नवकुमारो भूतले समुपविशति ) वत्स विवशोऽसि महौषधं पिव, शक्तिं लभस्व। (नवकुमाराय सुरां ददाति )।

नवकुमारः—(सुरां पीत्वा) अहो सबलोऽस्मि सञ्जातः।

मतिः—भगिनि ! तव एतस्य त्यागस्य कृते नास्ति मे प्रतिदानसामर्थ्यम्। तथापि गृह्यतामिदमङ्गुरीयकम् ( स्वहस्तात् अङ्गुलीयकमुन्मोच्य कपाल-कुण्डलाया हस्ते तद् आमुञ्चति )। इदं अङ्गुरीयकं दृष्ट्वा स्मर्तव्या ते इयं यवनी भगिनी। (कपालकुण्डलामालिङ्गय) तस्याः शिरसि परिचुम्ब्य मन्दं मन्दं निष्क्रान्ता )। ( क्रमशः )

---

श्रीश्रीतारकेश्वरसंस्कृतराष्ट्रभाषासम्मेलने स्वागतसभाध्यक्षाणां
महामहोपाध्यायश्रीकालीपदतर्काचार्यमहोदयानाम्

# स्वागतसम्भाषणम्

निबन्धकः—श्रीकालीपदतर्काचार्यः

( पूर्वानुवृत्तम् )

अन्यच्च सत्ययुगात् प्रभृत्येव भारते वर्षे सुचिरं यावत् स्वयंवरवरणरीतिर-वर्तिष्ट महीपतिदुहितॄणाम्। तत्र स्वयंवरसभायां नानादेशीया महीपतयो जनाश्चापरे निमन्त्रिताः समवेता अभूवन्। येषां विभिन्नप्रदेशवास्तव्यानां विभिन्नैव भाषा। ते तत्र सम्मिलिताः कया भाषया मिथः संलापमकुर्वन्। न खलु

युज्यते कल्पयितुं तदानीं परस्परप्रदेशभाषामजानतां मौनमेव तेषां, नापि निखिलदेशभाषाभिज्ञत्वं समं समेषाम्। तदासीत् सर्वदेशसाधारणी काचिदेका सर्वभारतीया भाषा, या तदा संस्कृतान्नातिरिच्यते। संस्कृतव्यतिरिक्तानां तदानीन्तनापरसर्वभाषाणामेव तासामन्यतमभाषया काम्यसिद्धयसम्भवात्। कुरुक्षेत्रमहासंग्रामादावपि गत्यन्तराभावेन सिद्धं संस्कृतस्यैव सर्वदेशसंवादोपकरणत्वेन सर्वदेशपरिगृहीतत्वम्, सर्वदेशसाधारणस्य कस्यापि भाषान्तरस्य तदानीमभावात्। तदानीन्तनानां राज्ञां भूयांसि भूम्यादिदानपत्राणि संस्कृतमयान्येव दृश्यमानानि राष्ट्रकृत्येषु संस्कृतस्य तादात्विकं व्यवहारमसंशयमेव सूचयन्ति। संसूच्यते तदा तदा समाजेऽपि भूयान् व्यवहारस्तस्या अद्याप्यंशतः पत्रादिषु प्रचरता 'श्रीचरणकमलेषु प्रणतिपूर्वकनिवेदनमिद' मित्यादिनानाविधसंस्कृतवचनप्रपञ्चेन। तदानीन्तने काले संख्यातीतानां राज्ञां संस्कृतज्ञा एव पण्डिता मन्त्रिपदमधिरुह्य राज्यस्य समुन्नतिं महतीं सम्पादितवन्त इति प्रसिद्धेतिहासादिग्रन्थपर्यालोचनया शक्यते विज्ञातुम्।

तदनन्तरं प्राप्ते माहम्मदाधिकारे या भाषा राष्ट्रभाषा समजनि, सा संस्कृतादन्या भाषा माहम्मदविशेषाणाम्। ततः प्रभृति सुचिरं यावत् सैव राष्ट्रभाषा, तस्यामेव दक्षाणाञ्च विदुषामभूद्भारतराष्ट्राधिकारे सम्मानो भूयान्। संस्कृतं पराभवन्त्याः सुमहानासीत्तदा प्रचारस्तस्याः।

अथात्र क्रमेण सन्निरूढे युरोपाधिकारे विघटितं राष्ट्रभाषात्वं तस्या माहम्मदभाषायाः, समधिकृतञ्चेदं युरोपीयभाषया, या तावदाङ्गलभाषेति संस्तूयते भाषा। अथ युरोपीयराजशक्त्या राजकार्यादिसौकर्याय सर्वं भारतमभिव्याप्य कृतेनाङ्गलभाषायाः प्रचारेण तथा सुमहता प्रसारेण प्राक्तनमाहम्मदाधिकारादेव क्रमेण क्षीयमाणा गीर्वाणवाणी तदानीं स्वीयप्राक्तनगौरवाद् भ्रष्टा समजनिष्ट। महता प्रभावेण च तस्या राजभाषायाः प्रभवन्त्या युरोपीयसंस्कृत्या पराभूता प्राचीनभारतसंस्कृतिरपि नामशेषतामिव समासादितवती। तदानीमाङ्गलविद्यैव विद्या, नापरा विद्या, पाश्चात्त्यानामाचार एवाचारो, न प्राच्यानां भारतीयानाम्। राष्ट्रकृत्यादिषु प्रवेशो बहुमानश्च युरोपीयभाषाविदामेव, नापरेषाम्। का कथा

द्रविणाद्युपयोगिनो लौकिकमार्गस्य, धर्म्यायामलौकिकपद्धतावपि ततः प्रभृति पाश्चात्यानामेव महती प्रतिष्ठा समवर्त्तिष्ट, निष्ठाविरहश्च प्राच्यभारतीयधर्ममार्गे। एवमेव व्यतीते महति काले पराधीनताविषज्वालामसहमानैर्भारतस्य तावता कालेन महान्तमपचयमनुभवद्भिरहिंसाव्रतप्रहरणैर्महात्ममार्गमनुगच्छद्भिः संख्यातीतभारतजनैर्भारतीयवहुजनजीवनव्ययादिना विनैव संग्रामं समपवाहिता भारतवर्षात् पाश्चात्त्यराजशक्तिः, स्वेच्छयेव परिहृतं भारतस्य मुख्यनायकत्वं युरोपीयराजपुरुषैः। प्राप्तमिव स्वाधीनतागौरवं भारतवर्षेण। अथैवमुपनते सौभाग्यव्यतिकरे राष्ट्रकृत्यानि सर्वाण्येव साधयितुमुपक्रान्तानि स्वतन्त्रतयेव भारतवर्षेण। तदर्थं प्रवर्त्तिता विधानपरिषदः प्रदेशेषु, लोकसभा चैका सर्वनियामिका देहलीनगर्याम्। लब्धास्पदा चैषा जिज्ञासा तदानीं, कया भाषया भारतराष्ट्रेण स्वीयकृत्येषु प्रवर्त्तितव्यं, का नाम भाषा भारतराष्ट्रभाषा भवितेति। तत्र वर्त्तमानं भारतसंविधानं वदति, हिन्दीभाषैव भारतराष्ट्रभाषा भवितेति। तस्यायमभिप्रायः, यत् हिन्दीभाषा यथा बहोः कालात् प्रभृत्येव भारते चान्यत्र च भूयःप्रचारा भाषान्तरभाषिभिरपि प्रतिपद्यते प्रयुज्यते च कृत्यपदेषु भूयस्त्वेन, न तथा काचिदन्या भाषा। तस्मादस्या एव सर्वथा युक्तं राष्ट्रभाषात्वमित्यादि। तत्र वयं विमृशामः,— हिन्दीभाषा नाम भारतीयभाषान्तरवत् प्रादेशिकी भाषा। न तस्यास्तथा साहित्यगतः समुत्कर्षो यथा प्रत्यक्षमीक्ष्यते भारतीयप्रादेशिकभाषान्तरस्यापि। नापि दृश्यते तस्याः सामर्थ्यातिशयो निखिलानेव निवेदयितुं मनोगतानर्थान्। युक्तं तस्या एव भाषाया राष्ट्रभाषात्वं, यस्या वरीवर्त्ति भूयान् साहित्यगतः समुत्कर्षः सामर्थ्यञ्च सर्वानर्थाननायासमावेदयितुम्। ततस्तथाभूताया हिन्दीभाषाया राष्ट्रभाषात्वे विपद्येतैव राष्ट्रकृत्यं, नतु निराबाधं सम्पद्येत। ततस्या एव युक्तं राष्ट्रभाषापदं भाषायाः, यस्या नास्ति लेशतोऽपि दैन्यं साहित्ये, विनिवेदने च सर्वेषामेव मनोगतार्थानाम्।

( क्रमशः )

---

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

## श्रीचैतन्यचरितामृते मध्यलीलायां

## द्वितीयः परिच्छेदः

( पूर्वानुवृत्तः )

माधुर्यञ्च स्वरूपस्य जगदानन्दकस्य च ।
गदाधरस्य चेत्येवं चतुर्धा वशगः प्रभुः ॥७३

लीलाशुकस्य मर्त्त्यस्य यदि भावोद्गमोऽभवत् ।
ईश्वरस्य तदा भावोद्गमे क इव विस्मयः ॥७४

विषयोऽपि स्वयं मुख्यरसस्यासीत् स आश्रयः ।
तेनैवं सर्वभावानां स्फुरणं तत्र सङ्गतम् ॥७५॥

पुरा श्रीव्रजलीलायां न पूर्णं वाञ्छितत्रयम् ।
महतापि प्रयत्नेन न तेनास्वादितं तदा ॥७६

भावसारं हि राधाया अङ्गीकुर्वन् स्वयं प्रभुः ।
तदेवास्वादयामास पूर्वोक्तं वाञ्छितत्रयम् ॥७७

स्वयमास्वाद्य तद्भक्तान् शिक्षयामास सर्वथा ।
प्रेमचिन्तामणिस्वामी दानवीरो महाप्रभुः ॥७८

पात्रापात्रविचारेण विनैव यत्र तत्र सः ।
दत्तवान् प्रेमसम्पत्तिं प्रभुर्दातृशिरोमणिः ॥७९

अयं गुप्तोऽपि भावाब्धिर्वितीर्णस्तेन भूतले ।
यस्यैकविन्दुमात्रोऽपि नैव लब्धो विरिञ्चिना ॥८०

दयालुरवतारो वा दाता वा नास्ति तादृशः ।
अनन्तांस्तद् गुणान् कोऽपि नैव वर्णयितुं क्षमः ॥८१

एवं विचित्रा लीलास्य चैतन्यस्य महाप्रभोः ।
भाषया नैव निर्वाच्या नाप्यनुक्ता तु बुध्यते ॥८२

चैतन्यस्य कृपा यत्र स एव ज्ञातुमर्हति ।
तस्य दासानुदासस्य सङ्गस्तेनैव लभ्यते ॥८३

तल्लीला रत्नसारो हि स्वरूपस्तस्य पेटकः ।
स एव रघुनाथस्य कण्ठे निहितवान् स्वयम् ॥८४

यत् किञ्चित्तत आकर्ण्य तथैवेदं सविस्तरम् ।
विरचय्य च भक्तेभ्य उपहारं ददाम्यहम् ॥८५

यदि कश्चिद् वदत्येवं ग्रन्थः श्लोकमयः कृतः ।
प्राकृतानां जनानान्तु बोध्यो नायं भवेदिति ॥८६

प्रभोर्यथाभूदाचारस्तथैव वर्ण्यते मया ।
सर्वेषामपि चित्तानि नैवाराधयितुं क्षमे ॥८७

न केनापि विरोधो मे नानुरोधोऽस्ति कस्यचित् ।
यद्धि स्वाभाविकं वस्तु तदेवात्र विविच्यते ॥८८

रागद्वेषौ यदि स्यातां तत्राविष्टं भवेन्मनः ।
तथात्वे च यथाभूतं लेखितुं नैव शक्यते ॥८९

चैतन्यचरितं ह्येतदीदृशं परमाद्भुतम् ।
नापि चेद् बुध्यते कश्चिच्छ्रूयमाणं स बुध्यते ॥९०

प्रीतिः सञ्जायते कृष्णे रसरीतिज्ञता तथा ।
आकर्ण्यत एवेदं जनस्य स्यान्महाहितम् ॥९१

श्रीमद्भागवतं श्लोकमयं संस्कृतभाषया ।
रचितापि च तट्टीका कथं लोकेषु बुध्यते ॥९२

अत्र द्विचतुराः श्लोका व्याख्याता वङ्गभाषया ।
तथाप्येतान् जनाः सर्वे बोद्धुं नालं कथं पुनः ॥९३

सूत्राण्यन्तिमलीलाया वर्ण्यन्तेऽत्र मया मनाक् ।
वाञ्छा चेतसि जागर्ति विवरीतुं सविस्तरम् ॥९४

अस्ति चेदायुषः शेषः कृपा चेन्मयि च प्रभोः ।
लीलाशेषं प्रभोस्तर्हि वर्णयिष्ये सविस्तरम् ॥९५

लिखतः कम्पते पाणिर्जरसा विकलस्य मे ।
स्मर्तुं पूर्वश्रुतं वस्तु मनसो नास्ति मे बलम् ॥९६

नयनाभ्यां न पश्येयं कर्णाभ्यां शृणुयां न च ।
तथाप्येतल्लिखामीति नूनं परमविस्मयः ॥९७

सारोऽयमन्त्यलीलाया रचितोऽत्र सविस्तरम् ।
सूत्रमध्ये मयेदानीं कथञ्चिद् वर्णना कृता ॥९८

अधुना चेन्मरिष्यामि पुनर्वर्णयितुं तदा ।
नैव शक्ष्यामि, लीलेयं भक्तानां धनमस्त्विति ॥९९

संक्षिप्तेऽत्र कृते सूत्रे न यद् यल्लिखितं मया ।
तत्तल्लेखिष्यते सर्वं विस्तरेणाग्रतः पुनः ॥१००

तावच्चेज्जीवनं लप्स्ये कृपया श्रीमहाप्रभोः ।
लेखिष्यामि यथाकामं सविचारमहं तदा ॥१०१

कनिष्ठज्येष्ठभक्तानां वन्देऽहं चरणाम्बुजम् ।
कृपां कुर्वन्तु ते सर्वे मयि सन्तुष्टचेतसः ॥१०२

सम्मतं यत् स्वरूपस्य श्रीरूपरघुनाथयोः ।
ज्ञातं यावच्च तत् सर्वं लिखामि, दूषणं न मे ॥१०३

श्रीचैतन्यपदाम्भोजं नित्यानन्दपदाम्बुजम् ।
अद्वैतस्य पदं भक्तपदञ्च मूर्ध्नि धारयन् ॥१०४

सनातनस्य रूपस्य स्वरूपरघुनाथयोः ।
श्रीपदाब्जपरागेण स्वशिरो भूषयाम्यहम् ॥१०५

हरिदासप्रमुखांस्तान् वैष्णवान् व्रजवासिनः ।
वन्दे भक्त्या यतस्तेभ्यो लब्धमाज्ञाधनं मया ॥१०६

श्रीचैतन्यविलासाब्धेर्ये कल्लोलस्य विन्दवः ।
तेषामेकः कणः कृष्णदासेनेहाभिधीयते ॥१०७

इति श्रीचैतन्यचरितामृते मध्यखण्डेऽन्त्यलीलासूत्रकथने प्रेमोन्माद-प्रलापवर्णनं नाम द्वितीयः परिच्छेदः

( क्रमशः )

---

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. Re. 1-8 ; Re, 1-4 ( for members ).

14. **Nala-damayantiyam** ( a new Drama ) of MM, Kalipada Tarkacharya. Rs. 1-8 ; Rs. 2 ( for members ).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2 ; Re. 1-8 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr, Pashupatinath Shastri M. A,, B. L., Ph. D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; Rs. 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed, by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; 6 ( for members),

21 **Manodutam** of Vishnudasa—Ed. by prof. Chintaharana Chakravarti. M. A. Re. 1-4 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs, 2 ; Re. 1-8 ( for members).

23. **Devisatakam** of Mahmahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., As. 8.

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kali pada Tarkacharya, Rs. 5 ; Rs. 4-8 ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re. 1-8 ; Re. 1-4 ( for members ).

---

अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनस्य

# आवेदनम्

अखिलभारतसम्मानिता संस्कृतभाषा यथा भारतराष्ट्रस्य राजभाषात्वेन परिगणिता स्यात् तदर्थं १९५८ खृष्टाब्दीये मे-मासे युगाचार्य-श्रीश्रीसीताराम-दासोङ्कारनाथचरणानां प्रधानाध्यक्षयेण कलिकातामहानगर्यामेकमखिलभारतीय-संस्कृतराष्ट्रभाषासम्मेलनमनुष्ठितम्। तत्र तदीयोद्देश्यसाधनाय काचित् साधारणपरिषत् काचित् कार्यनिर्वाहकपरिषच्च सुसंघटिते। तत्र तत्र सर्वेषां भारतहितैषिणां यथासम्भवं सदस्यपदाधिकारेण सर्वथा साहायकविनियोगः सम्प्रार्थ्यते।

तत्र साधारणसदस्यपदाधिकाराय प्रतिवर्षमेकं रूप्यकं कार्यनिर्वाहकसदस्य-पदाधिकाराय च रूप्यकद्वयं सम्पादकसविधे दातव्यम्।

विनीत—

स्थानसङ्केत :— श्रीनिर्मलचन्द्रदासगुप्त-

३नं शम्भुनाथपण्डित ष्ट्रीट् श्रीनगेन्द्रनारायणचतुर्धुरीणयोः

कलिकाता-२० सम्पादकयोः

## तत्र विशिष्टकर्माध्यक्षा :—

पूज्यपाद—श्रीश्रीसीतारामदासोङ्कारनाथमहाराजः ( सभापतिः )

डाः—श्रीनलिनीरञ्जनसेनगुप्त एम-डि महोदयः ( कार्यनिर्वाहकसभापतिः )

विचारपति—श्रीरमाप्रसादमुखोपाध्याय एम् ए. वि-एल् ( पृष्ठपोषकः )

श्रीश्रीजीवन्यायतीर्थ—श्रीचपलाकान्तभट्टाचार्य एम्-ए—श्रीवसन्तकुमार-चट्टोपाध्याय एम्-ए प्रमुखाः ( सहसभापतयः )। उक्तौ सम्पादकौ च।

---

Printed by Bishnupada Bhattacharya M. A. Kavyatirtha. at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghose Lane, Calcutta and published by the same form Sanskrit Sahitya parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta.

7-4-59

Reg. No. C 1073

Vol. XXXXI. November 1958

No. 7 १८८० शकीये

४२श-वर्षस्य कार्त्तिके

७म-संख्या मासे




# संस्कृतसाहित्यपत्रिका

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—1-4d

## अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनस्य

# आवेदनम्

अखिलभारतसम्मानिता संस्कृतभाषा यथा भारतराष्ट्रस्य राजभाषात्वेन परिगणिता स्यात् तदर्थं १९५८ खृष्टाब्दीये मे-मासे युगाचार्य-श्रीश्रीसीताराम-दासोङ्कारनाथचरणानां प्रधानाध्यक्ष्येण कलिकातामहानगर्यामेकमखिलभारतीय-संस्कृतराष्ट्रभाषासम्मेलनमनुष्ठितम्। तत्र तदीयोद्देश्यसाधनाय काचित् साधारणपरिषत् काचित् कार्यनिर्वाहकपरिषच्च सुसंघटिते। तत्र तत्र सर्वेषां भारतहितैषिणां यथासम्भवं सदस्यपदाधिकारेण सर्वथा साहायकविनियोगः सम्प्रार्थ्यते।

तत्र साधारणसदस्यपदाधिकाराय प्रतिवर्षमेकं रूप्यकं कार्यनिर्वाहकसदस्य-पदाधिकाराय च रूप्यकत्रयं सम्पादकसविधे दातव्यम्।

विनीत—

स्थानसङ्केत :— श्रीनिर्मलचन्द्रदासगुप्त-

३नं शम्भुनाथपण्डित ष्ट्रीट् श्रीनगेन्द्रनारायणचतुर्धुरीणयोः

कलिकाता-२० सम्पादकयोः

### तत्र विशिष्टकर्माध्यक्षा :—

पूज्यपाद—श्रीश्रीसीतारामदासोङ्कारनाथमहाराजः ( सभापतिः )

डाः—श्रीनलिनीरञ्जनसेनगुप्त एम-डि महोदयः ( कार्यनिर्वाहकसभापतिः )

विचारपति—श्रीरमाप्रसादमुखोपाध्याय एम् ए. वि-एल् ( पृष्ठपोषकः )

श्रीश्रीजीवन्यायतीर्थ—श्रीचपलाकान्तभट्टाचार्य एम्-ए—श्रीवसन्तकुमार-चट्टोपाध्याय एम्-ए प्रमुखाः ( सहसभापतयः )। उक्तौ सम्पादकौ च।

---

Printed by Bishnupada Bhattacharya M. A. Kavyatirtha. at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghose Lane, Calcutta and published by the same form Sanskrit Sahitya parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा-रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXXI. No. 7 | १८८०-शकीये कार्तिके ४१श-वर्षस्य ७म-संख्या | November 1958.

## मतिमञ्जरी

### विजया

निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः

विजया नाम विजयमुहूर्तसाध्यः शक्तित्रयसम्पन्नस्य यात्रासमयः । दुर्गापूजायां देव्या विसर्जनात् परं गुरुभ्यः प्रणतिः, स्नेहभाजनेभ्य आशीर्वादः, बन्धुभ्यः प्रीतिः, आलिङ्गनं समानवयोभ्यः, शत्रुभ्योऽपि च यथायथं प्रीत्यादिसंवेदनं वैशिष्ट्यं विजयायाः । आजीवनमस्माभिः शक्तिसाधना विजयानुष्ठानं च सम्पाद्येते —तथापि वयं कथं दुर्बला जाताः ? मन्ये एषा शक्तिसाधना गतानुगतिकप्रवाह-पतिताऽनुष्ठानमात्रप्रधाना मृता । यद्येषा प्राणवती तदा वीर्यवत्यपि स्यादेव । वैदेशिकैराक्रमणेनादौ प्रभुशक्तिरायत्तीकृता, एवं च प्रनष्टप्रभुशक्तीनां नः कुतो वोपयोगो मन्त्रशक्तेरुत्साहशक्तेर्वा । दीर्घपाराधीन्येन विस्मृताऽस्माभिरात्मशक्तिः । अन्याय्यं पश्यन्तोऽपि वयं न प्रतिविधानाय समर्था भवेम । दुर्नयानुसारिणो भीत्या प्रणमामः । एवंक्रमेण दुर्नयपरम्परया वसुन्धरा समाच्छादिता ।

अथचाधुना स्वाधीने राष्ट्रे नागरिकैरवश्यकर्तव्यत्वेन दुर्नयप्रतिरोधः सम्पादनीयः। स च कथं भविष्यति? यत्र युगे तरुणा विद्यार्थिनोऽपि दुष्टनीतेरनुसरणेन पवित्रां विद्यामज्र्जयितुमुत्सहन्ते तत्र कुतः समाश्वासः? देशोऽयमाश्रम-धर्मानुसारिणाम्। अतो ब्रह्मचर्यं गार्हस्थ्यञ्चानुक्रमेणावलम्बनीयम्। श्रद्धया यदि बाल्यादेव विद्यार्थिनो ब्रह्मचर्यावलम्बनपूर्वकं न विद्यामज्र्जयेयुर्नवा नियमानु-वर्तितामभ्यस्येयुस्तदा ते कथं यौवने राष्ट्रभारग्रहणाय प्रभवेयुः? दृश्यते च बाल्या-देव राजनीतिचर्चा विद्यार्थिषु। या राजनीतिरतिसूक्ष्मबुद्धिभिरप्यधिगन्तुमशक्या सा बालक्रीडायै प्रवर्तितेत्यहो आश्चर्यम्। शक्तिस्त्वर्जनीया व्युत्क्रमेण—आदौ उत्साहशक्तेर्विनियोगः। सिद्धायामुत्साहशक्त्यां मन्त्रशक्तेर्विनियोगः—परिनिष्ठितायां मन्त्रशक्त्यां प्रभुशक्तिः स्वयमेवागमिष्यति, किन्तु तदानीं प्रभुशक्ति-व्यवहाराय शक्तिसाधकस्य स्पृहा नोदेष्यतीति चित्रमेतत्। अकृत्वापि शक्ति-साधनामिदानीन्तनाः शक्तिसम्पन्ना जाता अतः प्रतिपदं ते पराभवमनुभवन्ति। वृक्षरोपणानन्तरं यदि फलं काम्यते तर्हि सा कामना किं फलवती भवति?

अद्य विजयामुहूर्ते यां विजयां देवीं स्मरामः—सा सर्वथास्मभ्यं कल्याण-मायच्छतात्—यथा दुर्बलताऽपगता स्याद् नागरिकेभ्यस्तदर्थं तामेव स्तुमस्तस्यै च प्रणमामः—

या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥

एत वत्सकाः! मातरं शक्तिं प्रणमत। प्रार्थयत च पूर्णां शक्तिम्। नियमेन सञ्चरत। साफल्यं सम्पूर्णं लब्धारः। सर्वे कल्याणधर्माणो भवन्तु। समुपार्जिता शक्तिर्जगत्कल्याणाय प्रवर्तताम्, यात्रास्माकं शुभाय भवत्विति।

---

# योगिभक्तचरितम्

( काव्यम् )

## नवमः सर्गः

(निबन्धकः—श्रीकाश्यपकविः)

( पूर्वानुवृत्तम् )

प्रभूतार्थसाध्यं विधानोपयुक्तं तदानीं गृहं तत्र नैव प्रवृत्तम् ।
तदारभ्य वित्तस्य राशिं महान्तं मुदा संग्रहीतुं प्रवृत्ताः सुभक्ताः ॥१६

अनिच्छताप्यन्यगृहे निवासं तत्रैव भृत्याधिकृते निवासे ।
स्थितिः कृता योगिवरेण तेन लोकानुवृत्तिर्महतां हि धर्मः ॥१७

अत्रान्तरे भक्तवरस्य कस्यचित् नाम्ना महेन्द्रस्य विशेषयाच्ञया ।
सुदूरपल्लीमगमत् सभाक्तते स योगिवाड् यत्र महेन्द्रवाणिजम् ॥१८

भक्ता हि तत्रायसवर्त्मवाष्परथेन जग्मुर्मुदिताः सुदत्ताः ।
यातो गुरुर्वातरथेन तस्मिन् ध्यानप्रकाशो गुरुणा सहागात ॥१९

हर्षेण सम्भावयितुं महं तं श्रीनामसङ्कीर्तनकारिसङ्घः ।
सन्नद्धभावं किल तत्र वव्रे संख्यामतीता मिलिताश्च भक्ताः ॥२०

तत्रादराद् वाष्परथावरोहस्थानात् समारभ्य समस्तमार्गम् ।
महोत्सवस्यायतनं हि यावत् प्रसूनमालोभयतः प्रकीर्णा ॥२१

विचित्रगेहाभिमुखस्थचत्वरे विचित्रवस्त्रावरणं निवेशितम् ।
समन्ततः श्रीहरिनाममालिका प्रसारिता लेखमयी सुपावनी ॥२२

नानाविधश्रीहरिचित्रमालया धर्म्यैस्तथालेख्यशतैरलङ्कृते ।
तदङ्गनस्थे हरिमण्डपे जना मिथो हि संमर्दभृतश्चकाशिरे ॥२३

निशागमे नैशतमःप्रशान्तये कृता समन्तादपि दीपयोजना ।
प्रान्ते गुरोरासनमुज्ज्वलायतं सुगन्धिपुष्पस्तवकैरुपाचितम् ॥२४

सिन्दूररञ्जितसपल्लवनारिकेलो द्वारे व्यराजततरां शुभपूर्णकुम्भः ।
पार्श्वद्वये च कदलीतरुचारुशोभा चित्राम्बरेण समरञ्जि तदर्धभागः ॥२५

द्वारोपान्तात् समारभ्य श्रीगुरोरासनावधि ।
रक्तवस्त्रं समास्तीर्णं गुरुगौरवचिन्तया ॥२६

तुलसीतरुयुग्गशोभिते गुरुपीठाभिमुखे प्रवर्तितैः ।
परिपावनधूपधूमकैः मनसः कापि पवित्रताहिता ॥२७

सम्भाव्य कालमथ तत्र समागमार्हं श्रीठाकुरस्य सदयस्य महामहिम्नः ।
ध्यानप्रकाशसहितस्य मरुद्रथेन सम्भावनार्थमजनिष्ट जनप्रबन्धः ॥२८

अत्रान्तरे दृष्टिपथावतीर्णः सुसज्जितो वातरथः सुदूरे ।
श्रीठाकुरो यत्र पवित्रदृष्टिर्ध्यानप्रकाशेन सहोपविष्टः ॥२९

सङ्कीर्तनं पुण्यमयं तदैव प्रारम्भि भक्तैः परमप्रमोदम् ।
विघोषयन्तो जयशब्दमुच्चैः प्रपूरयन्ति स्म जना दिगन्तान् ॥३०

मृदङ्गनादो मधुरः प्रवृत्तः सङ्कीर्तनाङ्गं सह शङ्खशब्दैः ।
नार्यस्तथा मङ्गलशब्दयोगैः संसूचयाञ्चक्रुरतिप्रमोदम् ॥३१

सम्भूय सर्वे ध्वनयस्तदानीं शब्दं समन्तात् तुमुलं प्रचक्रुः ।
श्रोत्रं तदानीं बधिरायमाणं शब्दान्तरं नालमभूद् ग्रहीतुम् ॥३२

श्रीमण्डपद्वारि ततः सुशीघ्रं प्राप्ते गुरोर्वातरथे सशब्दम् ।
पुनः पुनर्भूरि जयप्रणादो बभूव लोकोत्तरमोदशंसी ॥३३

ध्यानप्रकाशेन गृहीतहस्ते भक्तोत्तमाभ्यर्थनयानुनीते ।
अथावतीर्णो किल योगिराजे जनाम्बुराशिश्चलतां जगाहे ॥३४

केचित् प्रणेमुः सुगृहीतपादा ये भक्तवर्याः सविधे तदासन् ।
गुरुं समुद्दिश्य परे सुदूरात् कृतप्रणामा मुदिताः कथञ्चित् ॥३५

भित्त्वा ततो भक्तगृहीतहस्तो जनाम्बुराशिं जयशब्दहृष्टः ।
श्रीमण्डपप्रान्तगतं स्वपीठं गत्वा क्रमेणोन्नतमध्युवास ॥३६

सहैव सङ्कीर्तनकारिसङ्घा मृदङ्गशङ्खादिरवैरुदीर्णैः ।
श्रीमण्डपान्तर्विविशुः सृजन्तः सङ्कीर्तनं साग्रहलोकसङ्घैः ॥३७

अथोपविष्टो गुरुर्वेदिकायां भक्त्या गुरुः सन्नतपूर्वकायः ।
विष्णुं ववन्दे तुलसीतरुञ्च ततोऽवदद् भावमयः समुच्चैः ॥३८

जय श्रीकृष्णचैतन्य नित्यानन्द जय प्रभो ।
हरे कृष्ण हरे राम राधे गोविन्द हे जय ॥३९

इदं मन्त्रपदं ब्रूहि नियतं तापशातनम् ।
सफलं जीवनं कुर्या वर्जयापरचिन्तनम् ॥४०

एवमुक्त्वा कियत्कालं गुरुर्भक्तिमतां वरः ।
जयशब्दमयं भक्त्या तं मन्त्रमुदचीचरत् ॥४१

तेन मन्त्रेण गीतेन भक्त्या सुमधुरस्वरम् ।
भक्तिप्रवाहः सुस्राव गङ्गेव हृदये नृणाम् ॥४२

तज्जयोक्तिप्रतिध्वानो गगने पवने दिशि ।
प्रकीर्णो जनयामास काञ्चिद्दिव्यां पवित्रताम् ॥४३

अथ तत्कीर्तनादूर्ध्वं भावाप्लुतमना भृशम् ।
गर्वप्रहाणायाश्रित्य गुरुर्बहुलमादिशत् ॥४४

ततः स्वरचितं गीतमगायन्मधुरस्वरम ।
यस्य गीर्वाणभाषायां रूपमग्रे प्रदर्श्यते ॥४५

हरे विपिन एतस्मिन्नेकाकी निवसाम्यहम् ।
प्रभो संबोधयामि त्वां कातरेणान्तरात्मना ॥४६

दीनबन्धो दयासिन्धो क्वासि मे देहि दर्शनम् ।
दीनः शिशुरहं किं वा वच्मि त्वां दीनदुःखहन् ॥४७

अन्तर्यामी भवान् वेत्ति निःशेषं हृदयं मम ।
येन दुःखहुताशेन दह्यते नित्यमुत्कटम् ॥४८

हरे दयालो घोरं तं वह्निं वारय वारय ।
प्रभो मदीया भित्तैषा जानाम्यत्र न संसृतौ ॥४९

आश्रयेण विनाभूतः कञ्चिदन्यं समाश्रयम् ।
सुतामम्बां गृहे त्यक्त्वा प्राप्तोऽस्म्येतद् घनं वनम् ॥५०

त्वदर्थं मनसोपेक्ष्य प्रभो सर्वं विपद्भयम् ।
यदि प्राणात्ययो मे स्यान्न ततोऽपि बिभेम्यहम् ॥५१

वत्स्याम्यहं सदा कुत्र श्रीहरे त्वं विराजसे ।
देहि पादाश्रयं देव करुणारससागर ॥५२

नयनाश्रुप्रवाहेण भवामि नितरां प्लुतः ।
भवितुं यदि शक्नोमि परिपूर्णमनोरथः ॥५३

तदैव प्रतियास्यामि भूयः स्वीयनिकेतनम् ।
त्यक्ष्याम्यहमिमान् प्राणानन्यथा तव सन्निधौ ॥५४

आलोक्यतां कृपासिन्धो सकृदालोक्यतां त्वया ।
सुतरां शीर्णतां प्राप्तमिदं मम कलेवरम् ॥५५

दिशश्चतस्रो वीक्षेऽहं शून्यशून्यास्त्वया विना ।
इदं सुदुःसहं दुःखं कस्य वा कथयाम्यहम् ॥५६

त्वं देवदुर्लभं वित्तं श्रुतं तन्मयका श्रुतम् ।
प्रभो तव कृते लोलं तथापीदं मनो मम ॥५७

पश्य मां सदयेनाक्ष्णा कुरु सिद्धमनोरथम् ।
दीनमेनं प्रभो सर्वे लोका वक्ष्यन्ति तावता ॥५८

योगयागैरलभ्योऽपि शिशुना लभ्यते हरिः ।
अवसानेऽथ गीतस्य गुरुरासीत् समाहितः ॥५९

इति श्रीकाश्यपकविविरचिते योगिभक्तचरितकाव्ये
नवमसर्गः समाप्तः ।

( क्रमशः )

---

# कुर्वन्नेवेह कर्माणि

निबन्धकः—श्रीदीननाथत्रिपाठी तर्कवेदान्ततीर्थः

( पूर्वानुवृत्तम् )

ननु शास्त्रविहितेनापि काम्यकर्मणा स्वर्गादिफलभोगार्थं जन्ममरणाद्यनर्थ-संसारप्राप्त्यवश्यम्भावात् कुतो रक्षेति चेत्। सत्यम्। कामात्मानोऽत्यन्त-विक्षिप्तचेतसः सहसा कामत्यागपूर्वकमीश्वराराधनार्थं कर्माणि कर्तुं न शक्नुवन्ति। ज्ञानस्य वार्ता त्वतिदूरे। ते यदि शास्त्रविहितेषु काम्येष्वपि नियम्येरन् तर्हि शास्त्रविहितस्य कर्मणो यत्किञ्चिच्छुद्धिकरत्वेन स्वर्गादिभोगा-नन्तरं प्रायशो मनुष्यजन्मलाभान्मनुष्यजन्मनि कदाचित्तत्त्वज्ञसंसर्गाद्वा काम्य-कर्मणामसकृत्फलभोगेन कथञ्चित्तस्यासारतां वा बुद्ध्वांशतो मुक्तीच्छायां जातायां निष्कामकर्मानुष्ठानचित्तशुद्धिश्रवणमननादिक्रमेणोत्पन्नविद्या मुक्ताभवन्ति। एत-दभिप्रायेण शास्त्राणि कथञ्चिच्छास्त्रविहितान्यपि काम्यकर्माणि विदधति निषिद्धकर्मणा तु तिर्यगादियोनिप्राप्त्याऽतिदीर्घकालानन्तरं कदाचिन्मनुष्य-योनिं प्राप्नुवन्ति। तत्रापि ज्ञानोत्पत्तेर्बहवो विघ्नाः। तिर्यगादियोनिषु प्रधानतो दुःखमोहौ सम्भवतः। मनुष्ययोनिं संप्राप्तोऽप्यशुभसंस्कारबाहुल्या-च्छ्रेयोमार्गे प्रवृत्तिर्दुर्लभेति महद्वैषम्यं शास्त्रविहितनिषिद्धकर्मणोः। तस्मात् 'कुर्वन्नेवेहे'त्यत्र सामान्यतः कर्मनिष्ठैवाविद्वांसं प्रत्यभिहिता। तत्र ये निष्कामाः कर्माचरणेन विशुद्धसत्त्वा जायन्ते तान् कर्मनिन्दाद्वारा श्रुति'रनजदेकमि'त्याद्यात्म-स्वरूपमश्रावयत्। ये च सकामास्तानपि कर्मसमुच्चितान्युपासनान्युपदिशन्ती मृत्युकाले प्राप्तेऽनावृत्तिलक्षणां गतिं प्रार्थयितुं विज्ञापितवती। 'कुर्वन्नेवे'त्यत्र केवलसकामकर्मोपदेशस्वीकारे तद्भाष्ये 'कथं पुनरिदमवगम्यते पूर्वेण मन्त्रेण संन्यासिनो ज्ञाननिष्ठोक्ता द्वितीयेन तदशक्तस्य कर्मनिष्ठेति ज्ञानकर्मसमुच्चयवादिना-माक्षेपस्तथा तदुत्तरत्वेन 'ज्ञानकर्मणोर्विरोधं पर्वतवदकम्प्यं यथोक्तं न स्मरसि

किमि'त्यादिवचनं समञ्जसं न स्यात्। यतो ज्ञानकर्म-समुच्चयवादिभिर्न सकाम-कर्मणा ज्ञानस्य समुच्चयोऽभिप्रेयते, येन तन्निरासो भाष्ये समञ्जसः स्यात्। भाष्य-कारेणाप्यत्र 'अथेतरस्यानात्मज्ञतयात्मग्रहणायाशक्तस्येदमुपदिशती'त्येवोक्तं न तु सकामस्य निष्कामस्य वेति विशेषग्रहणं कृतम्।

एवमत्र यथा कर्मत्वेन सकामानां निष्कामाणां वा सामान्यतः कर्मनिष्ठोक्ता तथा बृहदारण्यकोपनिषद्यपि सामान्यतः कर्मनिष्ठा प्रदर्शिता। यथा—"सोऽकामयत भूयसा यज्ञेन यजेयेति" [बृः उः ३।२।६]। न च 'सोऽकामयते'त्यत्र सकामकर्मैवोपदिष्टमिति वक्तुं साम्प्रतम्। तत्र सकामकर्ममात्रोपदेशाभ्युपगमे 'अशोच्यानन्वशोचस्त्वमि'त्यादिगीताश्लोकव्याख्यानप्रसङ्गेन ज्ञाननिष्ठाकर्मनिष्ठा-विभागप्रदर्शनकाले भगवतां भाष्यकाराणां ज्ञाननिष्ठातः कर्मनिष्ठायाः पृथक् निष्ठात्वप्रमापकतया 'सोऽकामयते'त्यादि-शातपथीयब्राह्मणवाक्योद्धारो न सङ्गच्छेत। न हि गीताशास्त्रे मुख्यतया सकामकर्म कुत्राप्युक्तम्। तस्मात् 'कुर्वन्नेवेहे'त्यत्र सामान्यतः कर्मनिष्ठैवोक्ता। किञ्च न हि कर्मणां स्वतः सकामता निष्कामता वा कुत्राप्यस्ति, कर्तुः कामनासद्भावासद्भावाभ्यामेव कर्मणां सकाम-निष्कामताव्यपदेश इति शास्त्रविहितानां कर्मणां स्वाभाविकनिषिद्धकर्मभ्यां श्रेयोऽनुगुणतया ज्ञानानधिकारिभिः सर्वथा निषिद्धकर्मपरित्यागेन शास्त्रविहितानि कर्माणि कर्तव्यानीति 'कुर्वन्नेवेह'मन्त्रस्याभिप्रायो बोद्धव्यः।

---

# वेदान्तविमर्शः

[ निबन्धकः—श्रीचारुकृष्णदर्शनाचार्यः ]

( पूर्वानुवृत्तः )

जनकयाज्ञवल्क्यसंवादे च सूर्यचन्द्राग्निवागात्मज्योतिःपर्यन्तेन स्वप्न पर्यन्त्य एवोद्दिष्टो न च सुषुप्तौ ज्योतिःसम्बन्धोऽभिहितस्तत्र ज्ञानाभावात्। मोहवत् प्रत्यभिज्ञाबलादेवात्मास्तित्वप्रत्ययः सुषुप्तौ। प्रत्ययविशेषस्य निद्रात्व-मुच्यते योगैस्तत्र सात्त्विक्या निद्रायाः प्रत्यवमर्शाकार उक्तः "सुखमहमस्वाप्सं प्रसन्नं मे मन" इति, राजस्या निद्राया "गाढं मूढोऽहमस्वाप्सं, गुरूणि मे गात्राणि क्लान्तं मे चित्तमि"ति। एतैश्च प्रत्यवमर्शैः प्रत्ययविशेषत्वं साधितं निद्रायाः। यथा सोपद्रवनिद्रायां 'दुःखमहमस्वाप्सं स्त्यानं मे मन' इति प्रत्य-वमर्शो न तथा निरुपद्रवनिद्रायामित्युपद्रवाभावादिन्द्रियप्रसादाच्च 'सुखम-स्वाप्समि'ति व्यपदेशो लोकानामिति सुखपदेन दुःखाभाव एव लक्षितो ज्ञेय इति न सुषुप्तौ सुखोपलब्धिः। न च निद्रायाः प्रत्ययविशेषत्वमिष्यते वेदान्ते, बाह्येन्द्रियोपरमे मानसप्रत्ययविशेषः स्वप्नः, पुरीतति ब्रह्मण्येकीभावात् जीवस्य स्तिमितता सुषुप्तिः। तस्मात् सुषुप्ताविन्द्रियाणां व्यापारोपरमे श्रमापगमा-दिन्द्रियलाघवादुपजातो दुःखाभाव एव सुखत्वेनावमृश्यते जागरे न तदा सुखोपलब्धिरिति।

न च "नेति नेती"तिश्रुत्या प्रतिषिद्धस्य जगतोऽन्यत्र स्थितिसम्भावनायां तत्प्रतिषेधार्थं ब्रह्मणि जगतः सृष्टिमुक्त्वा ब्रह्मण्येव जगतः स्थितिं दर्शयन् तत्रापि निषेधेन मिथ्यात्वं निर्व्यूढं जगतो दर्शितवानिति वाच्यं, "द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्त्तं चे"ति मूर्तामूर्तप्रपञ्चस्य ब्रह्मण एव रूपत्वमुक्तम्। न च तद् ब्रह्मण एव रूपं सत् ततोऽन्यत्र स्थातुमर्हति। माभूत् कुण्डलं सुवर्णस्य रूपम् सत् सुवर्णादन्यत्र स्थितमिति।

"एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥"
"नित्यं विभुं सर्वगतं सुसूक्ष्मं" "सत्यं ज्ञानमनन्तं ब्रह्म"
"यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् ।
वृक्षइव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥
"यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" ॥

"एकमेवाद्वितीयम्"

"पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" ॥

इत्यादिश्रुतिषु सर्वस्य जगतस्तस्यैव महिमत्वादंशत्वात् तेनैव पूर्णत्वात्, तस्य सर्वगतत्वादद्वितीयत्वादनन्तत्वाच्च, ब्रह्मशब्दस्य व्युत्पाद्यमानस्य निरतिशयबृहत्त्वावगमाच्च ब्रह्मणो व्यतिरिक्तस्याप्रसिद्धेरन्यत्र जगतः स्थितेः सम्भावनैव नोदेति, तथापि भ्रमात् सम्भावना चेत् तर्हि सृष्ट्यभिधानेऽपि तत्सम्भवात् तद्दोषतादवस्थ्यात् भ्रमस्य निरङ्कुशत्वात् । अतो ब्रह्मण्येव स्थितस्य ब्रह्मण्येव निषेधात् तुच्छत्वसम्भवे कृतं सृष्टिप्रपञ्चोपवर्णनेन । तथा 'नेति नेती'ति सामान्यतो निषेधात् ब्रह्मणि तदन्यत्र च निषेधप्राप्तेर्मिथ्यात्वावगतेः किमन्तर्गडुना सृष्टिप्रपञ्चोपवर्णनेनेति दिक् ।

ऐतिह्यवत् सामान्यतो ब्रह्मणि प्रतिपादिते तत्रानाश्वासात् सर्गादिनिमित्तोपादानत्वेनैव युक्त्या ब्रह्म सुदृढं प्रतिपादितं प्रतिपाद्य पुनर्मिथ्याभूतादीश्वरात् मिथ्याभूतस्य जगतो मिथ्यासर्गादिकथने एषां तुच्छत्वापत्तेरनाश्वास एव स्याद् ब्रह्मणि । वेदस्य च भगवतो विप्रलम्भकत्वमपि स्यात् । नचाविद्यके कार्येऽधिष्ठानापेक्षेत्युक्तम् । आविद्यकं च कार्यं विषयाभास एव ।

किञ्च न कश्चिदुदीचीं गन्तुकामः प्राचीमुदीचीभ्रमाद् गच्छन् पश्चात् सूर्योदयदर्शनात् स्वस्य भ्रमं जानन् सत्यपि भ्रमे पूर्ववत् प्राच्यां प्रवर्तते प्रवर्त्तमानो वा कदाप्युदीचीं लभते, तथा मायिकानां विचारप्रपञ्चाज् जगतो वेदस्य च

मिथ्यात्वेऽवधारिते तत्कर्त्तरि ब्रह्मणि वेदे चानाश्वासात् श्रवणमननादौ यागदानादौ च न कश्चित् प्रज्ञावान् प्रवर्त्तेत प्रवर्तमानो वा नेष्टं प्राप्नुयात्। न च दिग्भ्रान्तः पूर्वस्यां व्यवहारसत्यामुदीचीं लभते इति तुच्छो व्यवहार-सत्यः। अविद्याप्रतिभासकालिकत्वात् प्रातिभासिकमेवेष्यतामखिलं जगत् किं व्यवहारिकेण गण्डस्योपरि विस्फोटकेन। रज्जुसर्पदर्शनाद् भयकम्पादिवत् प्रातिभासिकमिलामिलादिदर्शनादेव सुखदुःखादिर्जायताम्। अधिष्ठानज्ञाना-भावाच्च न संसारदशायां तन्नाशः! न च मिथ्याभूताविद्यया मिथ्यास्रष्टु-मर्हति, सत्यस्यैव मायाविनः सत्ययैव मायया विचित्रकार्यक्षमया मिथ्यागजादेः सृष्टिदर्शनात्। न च स्वप्नदर्शी स्वप्नकाले स्वाप्नगजादेर्मिथ्यात्वं प्रत्येति, यदि च कथञ्चित् प्रतीयात् तदा पश्यन्नपि गजादिं न मुह्यति, इह तु संसारदशायामेव दिग्भ्रान्तस्य सूर्योदयवत् भवतां तर्कजालैरीश्वरस्य वेदस्य जगतश्च मिथ्यात्वं सुदृढं विनिश्चिन्वन् कथमीश्वरं वेदं च सत्यत्वेन श्रद्दध्यात् कथं वा जगत्यपि मुह्येत्। नचाशनायोदन्यादेर्मिथ्यात्वं निश्चिन्वन् कश्चित् प्रतीकारमकुर्वन् तूष्णीमास्ते। न च मरूदकेन कस्यचिदुदन्या निवर्तते निर्तवते च तड़ागोदकेनेति सत्यमेव तडागोदकं न मिथ्या। न च तत्त्वज्ञानात् विश्वप्रलय इत्यसकृदावेदितं सूत्रभाष्ये।

वस्तुतस्तु ‘ द्वे वाव ब्रह्मणो रूपे वेदितव्ये मूर्तञ्चामूर्तञ्चे”ति साकारनिराकार-द्वैविध्येन ब्रह्मणो रूपद्वयं भूतजातं कश्चिन् मन्येत एतद्रूपद्वयपरिमितमेव ब्रह्म नातोऽधिकमस्तीति तस्यैव प्रतिषेधार्थं “नेति नेती”ति श्रुतिर्नतु रूपद्वयप्रति-षेधार्थं, यथाहुरत्रभवन्तः सूत्राकाराः “प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति भूयः” इति ; अस्यार्थः—प्रकृतमूर्त्तामूर्त्तसमष्टिमात्रपरिमितत्वं ब्रह्मणः प्रतिषेधति “नेति नेती”तिश्रुतिर्यतस्ततो मूर्त्तामूर्त्ताभ्यां भूयः अधिकं ब्रह्मास्तीति श्रुतिर्वदति “एतावानस्य महिमा ततो ज्यायांश्च पूरुषः” “ज्यायान् दिवो-ज्यायानन्तरिक्षादि”ति। “यतो वा इमानि भूतानि जायन्ते तस्माद् वा एतस्मादात्मन आकाशः सम्भूत” ‘ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे”त्यादिभिर्महाप्रबन्धैः सृष्टितत्त्वमुक्त्वा तस्या एव निषेधानौचित्यात्। न च

मिथ्याभूतानां यथाक्रमं युक्त्युपेता सृष्टिप्रक्रिया दृश्यते लोके, यथाकाशादीनां, मायिकसृष्टावदर्शनात् । नच प्रासादारोहार्थं सोपानमाश्रितः प्रासादारोहात् परं सोपानस्य मिथ्यात्वं कश्चित् प्रत्येति, सृष्टिवाक्यानां कथामात्रत्वे तत्स्रष्टरि ब्रह्मण्यप्यनाश्वासः स्यात् जगत्स्रष्टृत्वेनैव ब्रह्मणः समर्पणादित्युक्तम् । रूपद्वयस्य लोकप्रसिद्धत्वेऽपि तस्य ब्रह्मसम्बन्धित्वप्रतिपादनार्थमेव हि शास्त्रस्य निर्देशस्तस्याप्रसिद्धत्वात् नतु प्रतिषेधार्थं तन्निर्देश इत्युक्तम् । बहुल सृष्टिवाक्यैस्तत्प्रतिपादनात् सप्रपञ्चत्वेऽपि ब्रह्मणः अन्योऽनश्नन्नभिचाकाशी' ति "असङ्गो नहि सज्जतेऽसितो न व्यथते न रिष्यतीति श्रुतिभ्यां विशुद्धत्वाव्याहतेश्च । असङ्गत्वं च व्योमवन्निर्लिप्तत्वं नतु सम्बन्धसामान्याभावो ब्रह्मण्योतप्रोतत्वश्रवणाज्जगतः, यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्व्वैरि"ति श्रुतेः,

"मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे"ति स्मृतेः ।

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः" ॥

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" ।

इति भगवद्वाक्येभ्यः, "ओतं प्रोतं पदवद् यत्र विश्वमि"ति श्रीभागवताच्च ।

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते" ॥

( क्रमशः )

---

महामहोपाध्यायश्रीकालीपदतर्काचार्यमहोदयानाम्

# स्वागतसम्भाषणम्

निबन्धकः—श्रीकालीपदतर्काचार्यः

( पूर्वानुवृत्तम् )

किञ्च सन्ति भारते वर्षे भूयांसः प्रदेशाः, तत्र केषुचित् प्रदेशेषु सत्यपि हिन्दीभाषायाः कथञ्चित् प्रचारे दाक्षिणात्यप्रमुखेषु बहुषु प्रदेशेषु हिन्दीभाषाया नाममात्रेणापि प्रचारो नोपलभ्यते। तत्र तत्र हिन्दीभाषायाः प्रशिक्षणार्थं भूयानर्थव्ययो राष्ट्रस्य प्रयत्नश्च भूयानपेक्षितो भविता। अन्तरालकाले च हिन्दीभाषामविदुषां तत्तत्प्रदेशवासिनां राष्ट्रकृत्यादिषु महदेव असौकर्यमनुभवितव्यम्। ये चाल्पका अपि तेषु हिन्दीभाषावेदिनस्तेषामेव महान्तं कालं यावत्तदपेक्षया महत् सौकर्यमुत्कर्षश्चेत्यसाम्योपहतोऽयं पन्थाः। इतः पूर्वं भारतराष्ट्रमासीदेकायत्तं राजतन्त्रं, तदानीं राजेच्छयैव तदिदं नियन्त्रितमभूत्। इदानीं तदिदं राष्ट्रं गणतन्त्रं जातम्। तत्र गणानां सर्वेषां सममेव राष्ट्रकृत्यादिषु सौकर्यमवेक्षणीयम्। तदिदमपोह्यं राष्ट्राधिकारेण, यत् किल केषाञ्चिज्जनगणानां सौकर्याय केषाञ्चिदसौकर्यायेति। यदि हिन्दीभाषा भारतराष्ट्रभाषा स्यात् हिन्दीभाषाभाषिणां देशविशेषवासिनामापाततोऽपि राष्ट्राधिकारादिषु महत् सौकर्यं प्रभावातिशयश्च सम्भविता। हिन्दीभाषा येषां मातृभाषा, तेषां तत्र शिक्षामनपेक्ष्यापि यादृशं स्वाभाविकं दाक्ष्यम्, शिक्षया तत्र दाक्ष्यमुपार्जितवतामपि नैव तादृशं दाक्ष्यं शक्यं समासादयितुम्, तेन च जिगीषामूलकराष्ट्रभाषापरीक्षादिषु समवतीर्णानां हिन्दीभाषाभाषिणामपरेषाञ्च सुमहदन्तरं स्यात्। ततः परीक्षासु विजयलाभेनैकेषां विशिष्टपदलाभः परेषां विजितानाञ्च न तथेति महता वैषम्येण गणतन्त्रताया विरोधो दत्तकरावलम्बः सम्पद्येत। तेन च तद्विजयपराजयकारणं हिन्दीभाषाया राष्ट्भाषात्वसम्पादनमेवेत्यवधारयतां पराजितानामहिन्दीभाषिणां हिन्दीभाषायाः पक्षपातेन राष्ट्रभाषात्वमङ्गीकृतवति भारतराष्ट्राधिकारे महानेव विद्वेषः समापतेत्। तेन च हिन्दी-

भाषिणामहिन्दीभाषिणाञ्च पारस्परिको विद्वेषः कलहागमस्तन्मूलञ्च भारत-राष्ट्रस्य प्रदेशविशेषाणां मैत्रीव्याघातेन महदनिष्टमापद्येत। गणतन्त्रतां भारतराष्ट्रगतामनुरुध्य प्रागुक्तभारतराष्ट्रानिष्टपरिहारञ्च समुद्दिश्य भारत-राष्ट्राधिकारेण तथैव प्रवर्त्तितव्यं यथा सर्वथा राष्ट्रभाषा पदानुगुणयशून्याया प्रादेशिक्या भाषाया राष्ट्रभाषात्वसमादेशेन राष्ट्राधिकारे पक्षपातादिविविध-दोषसमारोपः पदं कुर्वीत।

अन्यच्च हिन्दीभाषाया राष्ट्रभाषात्वपक्षे विनिगमनाविरहमपि दोषमुप-लभामहे। एकतरपक्षपातिनी युक्तिर्विनिगमना नाम। तदत्र सतीष्वप्य-न्यासु विविधगुणगुम्फितासु प्रादेशिकभाषासु विशेषतश्च गौरवातिशयेन समं परितः प्रचरन्त्यामपि निखिलप्रादेशिकभाषासाम्राज्यमहादेव्यां वङ्गीय-भाषायां कविसार्वभौमरवीन्द्र-वङ्किमचन्द्र-शरच्चन्द्रादिभिरभ्यर्हितां विभूति-मुपनीतायां तामिमां परिहाय कुतः खलु प्रादेशिक्यदोषजुष्टायाममुष्यां विगुणायां निर्वन्धातिशयो भारतराष्ट्रस्य? नह्यस्ति तादृशः कश्चन भाषान्तर-विलक्षणो गुणो हिन्दीभाषाया येनासावेव राष्ट्रभाषागौरवमश्नुवीत, नापरा प्रादेशिकी भाषा। तद् यथैव प्रादेशिक्यादिदोषराशिस्पर्शेन सुविपुलगुण-समृद्धाया निखिलभूमण्डलाभ्यर्हिताया अपि वङ्गभाषाया राष्ट्रभाषापदे नाधिकारस्तथैव हिन्दीभाषाया अपीत्यत्र को वा विवादः पक्षपातपरिहारेण सविचारमीक्षमाणानाम्। सर्वमिदमन्यच्च बहु विविच्य भारतीयमहामनी-षिणो राजा-गोपालाचारी-राधाविनोदपालप्रमुखाः कलिकातामहानगर्यां क्वापि जनसन्मेलने सोपपत्तिकं हिन्दीभाषाया राष्ट्रभाषात्वमतिमात्रं प्रतिषिध्य स्वाधीनेऽपि भारते वर्षे पूर्ववदाङ्गलभाषाया एव राष्ट्रभाषापदावस्थानमुचित-मित्युपपादितवन्तः। सत्यं सेयमाङ्गलभाषा तावन्तं कालं भारते वर्षे राष्ट्रभाषागौरवमधिरूढा सर्वेष्वेव राष्ट्रादिकृत्येषु सुप्रतिष्ठिता जाता। सुचिरात् प्रभृत्येव सैषा पाश्चात्त्यराजशक्तिप्रभावेण प्रायेण प्रतिगेहमात्मनो महान्तं प्रभावं विस्तारयन्ती जनैरभिष्टूयते। सत्यमियं विपुलया साहित्यसम्पदा सर्वैश्वर्यशालिनीं सुरसरस्वतीं विना परिभवत्यखिलान्येव भाषान्तराणि।

अवितथमिदं यदेषा सुतरां समर्था प्रतिपादने सर्वार्थानाम्। तथा नेदं तिरोहितं विदुषां, यदनया सहायभूतया युरोपीयप्रदेशादिगतानामनायासेनैव शक्यस्तत्तत्प्रदेशवासिभिः समं संव्यवहारः। सुविदितञ्चैतत् सर्वेषां यदद्यत्वे कालक्रमेण सैव भाषा शिक्षितानाम्, तन्निबद्धैव च विद्या विद्यावताम्। अनधिगततद्विद्या नाधिगच्छन्त्येव हि प्रायेण विद्यावतां कीर्तिम्। ततः किल सत्यमियं विपुलोत्कर्षा सर्वावनीव्यापिनी भारतराष्ट्रभाषापदाधिकारेऽपि योग्येति न वयं नाङ्गीकुर्मः। तथापि सैषा वैदेशिकी भाषेति नार्हति स्वाधीनं भारतराष्ट्रमिदमेनां राष्ट्रभाषात्वेन परिग्रहीतुम्। महदिदमपमानस्थानं स्वाधीनराष्ट्रस्य यदन्यदेशीयभाषाया राष्ट्रभाषात्वेन स्वीकरणं नाम, यदि तत्र राष्ट्रभाषापदग्रहणक्षमा काचित् स्वदेशीया भाषा सुदुर्लभा न स्यात्। ( क्रमशः )

---

# राजयक्ष्मचिकित्साविमर्शः

( पूर्वानुवृत्तः )

निबन्धक-कविराज-श्रीमुरारिमोहन घोष. ए, एम., भि, आयुर्वेदाचार्य
आयुर्वेदमहोपाध्याय-काव्यतीर्थ-वेदान्तशास्त्री

आयुर्वेदमहाविद्यालयसंश्लिष्टारोग्यनिकेतनेषु विविधानुपायानवलम्ब्य चिकित्साव्यवस्था जातेति सत्यं, किन्तु यक्ष्मरोगस्य तद्वदारोग्यनिकेतनं न विद्यते।

तस्मादायुर्वेदोक्तक्रियासमूहस्य परीक्षा अधुना न सम्भवति। अथच यक्ष्मरोगाधिकारे सुश्रुतेनोच्यते—स्थिरादिवर्गसिद्धेन घृतेनाजाविकेन च। स्निग्धस्य यदु कर्तव्यमूर्ध्वकाधश्च शोधनम्। आस्थापनं तथाकार्यं शिरसश्च विरेचनम्। यवगोधूमशालींश्च रसैर्भुञ्जीत शोधितम् दृढेऽग्नौ बृहयेच्चापि निवृत्तोपद्रवं नरम्" इति। स्थिरादिवर्गेण सह अजादुग्धान्मेषदुग्धाद् वा घृतं कृत्वा तद् घृतं विपाच्य तेन च रोगिणं स्नेहयित्वा मृदुक्रियायोगेन शरीरस्य ऊर्द्ध्वम् अधश्च संशोधनीयम् इत्यादि क्रियासम्पादनात् परं रोगिणाम् अग्निरुद्दीप्ततां याति तदा यवगोधूमशालि-

तण्डुलाद्यन्नं मांसरसेन सह पक्त्वा रोगिभ्यो दातव्यम्। एतेन तेषां शारीरिकं बलं सञ्जयते तेन च शरीरमध्ये उपचीयमानानि रक्तानि यक्ष्मरोगेण सह योद्धुं शक्नुवन्ति। आहारेषु भेषजेषु च यक्ष्मरोगवीजाणुगणः समूलं नाशमेति। यथोपयोगं स्थितेषु परीक्षागृहेषु एताः शास्त्रोक्तक्रियाः परीक्षणीया न पुनरयोग्येषु विधिगर्हितेषु स्थानेषु। तस्मात् पाश्चात्यदेशेषु अर्थव्ययबाहुल्यं विधायारोग्यगवेषणागारप्रतिष्ठा सञ्जाता, बहवोऽनुसन्धितत्सु-वैज्ञानिकचिकित्सकाश्च तेषु आरोग्यनिकेतनेषु गवेषणारेषु चाजीवनमेव साधनानिष्ठाः सन्तस्तेषां नवनवैराविष्कारैरिह लोकं चमत्कुर्वन्ति।

धन्वन्तरिसुश्रुतौ यक्ष्मरोगग्रस्तरोगिणां यदाहार्यं व्यवस्थापयामासतुः, तत् अद्यापि न परीक्षितम्। वस्तुतो दुःसाध्या एवैकेन चिकित्सकेन सुश्रुतोक्तक्रियापरीक्षा। कविराजमहोदयैः प्रायशः परीक्षाक्षेत्रमपि नैव प्राप्यते। रोगिणोयदवस्थायां तेषां शरणापन्ना भवन्ति तदा परीक्षाकालोऽपि दुर्लभ एव। यदिनैव तदा सुश्रुतेन किं मृषोक्तम् "काकानमूलूकान्नकुलानित्यादि। आहृतबलानां यक्ष्मरोगिणाम् अश्वगन्धया सह दुग्धपानव्यवस्थापि तेनैव कृता।

वलार्थं च सुश्रुतेन "क्षीरं पिबेद्वाप्यथ, वाजिगन्धा विपक्वमेवं लभते च पुष्टिम्" इत्यपि निरुक्तम्। यक्ष्मरोगे वासकमधिकृत्य सुश्रुतेनैवमुक्तं "तत्कुसुमैश्च सिद्धं सर्पिः पिबेत् क्षौद्रयुतं हिताशी" कासिं श्वासञ्च हन्यादपि पाण्डुताञ्च। इति। यक्ष्मरोगनाशकानि वहूनि मूल्यवन्ति भेषजानि एतद्देशेषु विद्यन्ते। किन्तु गवेषणाया तदाविष्कारस्पृहां केऽपि। मनुष्या अर्थाभावेन न शक्नुवन्ति सफलां कर्त्तुम्। एषोऽतिपरितापकरो विषयः पृष्ठपोषकाभावेन चायुर्वेदोक्तानि यक्ष्मरोगस्य बहूनि मूल्यवन्ति भेषजानि क्रमशो विलुप्तिं यान्ति। ये शिक्षितापि युवकर्मिणो यक्ष्मरोगगवेषणाकार्ये मनो निवेशयितुमिच्छन्ति तेषामन्नादिचिन्ता देशीयधनिभिः प्रशमनीयैव। नचेत् कर्मक्षेत्रे अभिलषितं फलं दुष्प्रापमेव। अतएव देशेषु देशीयमतेन कतिचित् आरोग्यनिकेतनानि नूनमेव प्रयोजनवन्ति। (क्रमशः)

---

# Sanskrit Sahitya Parishat Series

( Revised up to December, 1957 )

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chandra Siddhantabhushana. Re. 1-4; *Re*. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan. Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacbarya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Re. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. (for members). Rs. 2. 8 ; Rs. 2.

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8. Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 ( for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri- As. 4.

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Sbastri, M. A', B. L. Ph, D. Re. 1-8 ; Re. 1-4. ( for members ).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushana. As, 14 ; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharys—Edited by Pt. Bamacharan Kvyatirtha. As. 12 ; As. 10. (for membera).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. Re. 1-8 ; Re, 1-4 ( for members ).

14. **Nala-damayantiyam** ( a new Drama ) of MM, Kalipada Tarkacharya. Rs. 1-8 ; Rs. 2 ( for members ).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2 ; Re. 1-8 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr, Pashupatinath Shastri M. A,, B. L., Ph. D with the assistance of Prof. Chintaharana Chakravarti. M. A. Rs. 5 ; Rs. 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed, by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM, Kalipada Tarkacharya. Rs. 7 ; 6 ( for members).

21 **Manodutam** of Vishnudasa—Ed. by prof. Chintaharana Chakravarti, M. A. Re. 1-4 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipad. Tarkacharya. Rs, 2 ; Re. 1-8 ( for members).

23. **Devisatakam** of Mahmahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., As. 8.

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kali pada Tarkacharya, Rs. 5 ; Rs. 4-8 ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re. 1-8 ; Re. 1-4 ( for members ).

---

Reg. No. C 1073

Vol. XXXXI. December 1958

No. 8 १८८० शकीये

४२शे-वर्षस्य अग्रहायणे

८म-संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign p...

## Sanskrit Sahitya Parishat Series

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chandra Siddhantabhushana. Re. 1-4; *Re*. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan. Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Re. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. (*f*or members). Rs. 2. 8 ; Rs. 2.

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8. Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri- As. 4.

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Sbastri, M. A', B. L. Ph, D. Re. 1-8 ; Re. 1-4. ( for members ).

10. **Grahayaga-tattvam** of Raghunandana Bhaṭtacharya—Edited by Pt. Satish Chandra Siddhantabhushana. As, 14 ; As, 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharys—Edited by Pt. Bamacharan Kvyatirtha. As. 12 ; As. 10. (for membera).

इयं संस्कृत-साहित्य-परिषत् प्रतिभा-रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXXI. No. 8 | १८८०-शकीये अग्रहायणे ४१श-वर्षस्य ८म-संख्या | December 1958.

## मतिमञ्जरी

### महाकवि-प्रशस्तिः

निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः

यो भारतीवरसुतः प्रथितः पृथिव्यां
विद्याधरे नृपवरे च समानुभूतिः ।
रम्या नवा प्रकृतिरस्य विहारभूमि-
र्जीयाद् यशःशुचितनुः कविकालिदासः ॥

साम्प्रतमुज्जयिन्यां महाकवेः कालिदासस्य लीलावनौ गुणैकपक्षपातिभिर्भारत-राष्ट्रप्रधानैर्महताडम्बरेण "कालिदास-जयन्ती"ति-महोत्सवसमनुष्ठानेन समुपदर्शिता महाकवेः प्रतिभासमुज्ज्वलाः प्रतिक्षणं नवीनायमाना विचित्रा विभूतयः । यत्र च भारतस्य विभिन्नप्रान्तेभ्यः समेतैर्विपश्चिद्वरेण्यैर्महाकवि-विरचितानां दृश्यश्रव्यत्वभेदभिन्नानां साहित्यानां समुत्कर्षोऽभिनयद्वारा प्रदर्शितः समालोचितश्च । यत्र च सभापतिपदमलं कुर्वद्भिर्भारतराष्ट्रपतिभिः सम्यगा-

लोचिता महाकवेश्चिरस्मरणीया लोकोत्तररमणीया रचनापरिपाटी। येषां रचना कालव्यवधानेनाप्यव्यवहिता चिरनवीनेव प्रतिभाति त एव कवयो महाकविपदवाच्यतां भजन्ते। सेक्सपीयरादिपाश्चात्यमहाकविकाव्यवदेतेषां प्रतिभा-समुद्दीपितं साहित्यं चिरमपरिम्लानं जनमनः समुच्छ्वासयिष्यतीति विरम्यते पिष्टपेषणवत् तत्प्रतिभाप्रदर्शनप्रयत्नात्। केवलं विज्ञाप्यते कृतज्ञता गुणानु-रागिणः समुद्योक्तॄन् प्रति। तत्र च वङ्गप्रान्ततः कलिकाताराष्ट्रियसंस्कृत-महाविद्यालयाध्यक्षमहोदयानां नेतृत्वेन तत्रत्यानामध्यापकानामन्तेवासिचराणा-मिदानीमन्यत्र महाविद्यालयेष्वध्यापकपदमलङ्कुर्वतां च साहचर्येणाभिनीतमभिज्ञान-शाकुन्तलं नाम नाटकरत्नं महाकवेर्हृदयसर्वस्वम्। यदिदं नाटकं

वासन्ती सुषमा च नित्यमुदिता ज्योत्स्नाच्छविः शारदी
ग्रीष्मर्तोर्विमला प्रसूनकलिका वर्षारतिर्मञ्जला।
हेमन्ते शिशिरे च कापि सुषमा सर्वत्र चित्रं सुखं
सर्वं वाञ्छसि चेत् सुखं नु युगपत् शाकुन्तलं सेव्यताम्॥

इत्येवं समभिनन्द्यते प्रशस्तिवाचा रसवेदिभिः। विचित्रप्रकृतिके ऋतुषट्के सत्यमेवेदं यत्। विचित्राण्युपकरणानि विचित्रां प्रीतिं जनयन्ति समेषां वसुधावासिनामत्याश्चर्यां विचित्रां मुदमुपजनयत्येकमेवेदम्। अपि च

प्रणयिनां गृहिणां व्रतिनां तथा
युवकबालकवृद्धमनस्विनाम्।
किमिव वस्तु महाकविचित्रितं
सममुदं जनयद् यदिहाद्दतम्॥

इति यदि जिज्ञासा समुपजायेत—तदापि

समं समेषां सुखदायकं परं
नाट्यप्रधानं रसभावसुन्दरम्।
शाकुन्तलं नाम हि नाटकं महत्
साम्येन सर्वैरभिनन्दितं सदा॥

तदिदं नाटकरत्नं महाकवेः सर्वप्रतिभासारेणोपबृंहितं निपुणतया निष्कलुष-

मभिनोत् वङ्गभाषाभाषिभिरुच्चारणानभिज्ञापवादकलुषितैरपीति तत्रत्यानां विद्वदपश्चिमानामभिमतम् । सर्वेऽभिनेतारो धन्यवादार्हा उद्योक्तारश्च । सर्वैस्तैर्वै गुणग्राहिणी सुबुद्धिर्यथा समुदियात् तदर्थं सर्वेषां दृष्टिः सविनयमाकृष्यते । प्राचीनधारायाः सम्यगुपस्थानमशक्यमपि यथा लोककल्याणकारिणी भावधारा समनुवर्तिता सती भारतस्य चित्तवृत्तिं सुविशदां विदध्यात् यथा वा कुमतिरपगच्छेत् तदर्थमपि राष्ट्रशुभानुध्यायिभिर्यतितव्यमिति कालिदासाभिनन्दनसमये तेषामपि शुभमभिनन्दनमुत्तरकाले काम्यते स्मरणीयकीर्तिसंरक्षणपरिपाट्येति शम् ।

---

# कपालकुण्डला-रूपकम्

## सप्तमाऽङ्कः

### प्रथमं दृश्यम्

[ वनमध्यस्थितं भग्नमन्दिरम् ]

( पूर्वानुवृत्तम् )

नवकुमारः—अहह ! अशक्यमिदं द्रष्टुम् ।

कापालिकः—वत्स ! स्थिरो भव । महौषधं पिब । ( नवकुमाराय सुरां ददाति ) शक्तिं लभस्व ।

कपालकुण्डला—( आत्मगतम् ) सर्व्वथा आत्मविसर्ज्जनमेव मया कार्यम् ! जगदीश्वरीचरणतले देहं मे समर्पयिष्यामि ( ऊर्द्ध्वमवलोक्य ) अये विनिन्दितनवनीरदागलविलम्बितगलद्रुधिरनरकपालमाला कटितटविलम्बितनरकरराजिः वामकरार्पितमनुजकपाला रुधिरविलिप्तशरीरा—दक्षिणहस्तमुत्तोल्य आकारयतीव मां जगदीश्वरी— ! ( कतिचित् पदानि गत्वा पुरतः कापालिकं दृष्ट्वा ) के यूयम् ? यमदूताः ? नहि नहि पिता ? पितः किं मां छेत्तुमागतोऽसि ? एवं कुरु । गृहाण माम् ।

कापालिकः—वत्से ! आवाभ्यां सह आगच्छ । ( नवकुमारं प्रति ) वत्स ! कपालकुण्डलां स्नापयित्वा पूजास्थानं नय । अहं तत्रैव गच्छामि ।

( निष्क्रान्ते कापालिके कपालकुण्डलया सह निष्क्रान्तो नवकुमारः )

---

द्वितीयं दृश्यम्

[ गङ्गातटम् ]

( गायन्तीं कपालकुण्डलामनु प्रविशति नवकुमारः )

कपालकुण्डला—क्रोडे कुरु मां मातः !

कालक्रोडे न च निक्षेप्या
करुणां चत इति मातः ।
संसृतिदहन- ज्वालालीढा
क्लेशं कमिह न याता
जयति कालीति गिरं वदन्ता
यास्याम्यादिश मातः ।
क्रन्दितुमिह किं जगति किलेयं
मातस्त्वयका सृष्टा
क्रन्दनखिन्ना हतसर्व्वाशा
रथ्या चरणे चातः ॥

नवकुमारः—( कम्पान्वित-कण्ठः ) मृन्मयि !

कपालकुण्डला—नाथ ! किं भीतोऽसि ?

नवकुमारः—नाहं भीतः !

कपालकुण्डला—तत् कथं कम्पसे ?

नवकुमारः—यतः क्रन्दितुमसमर्थः ।

कपालकुण्डला—कथं क्रन्दिष्यसि ?

नवकुमारः—कथं क्रन्दिष्यामि इति कथं त्वया ज्ञास्यते मृन्मयि ! न त्वं

कदापि रूपमालोक्य उन्मत्ता जाता—न त्वं कदापि स्वं हृत्पिण्डं स्वयमेव छित्त्वा श्मशाने परित्यक्तुमागता ! ( उच्चैः रुदन् कपालकुण्डलायाः पदतले निपत्य ) मृन्मयि ! कपालकुण्डले तव पदतले लुठन्तं रक्ष माम् । सकृत् कथय न त्वं विश्वासघातिनीति ।

कथय मृन्मयि सकृत्कथय त्वाम् अहं हृदये गृहीत्वा गृहं यास्यामि ।

कपालकुण्डला—( नवकुमारमुत्थाप्य ) त्वं तु न कदापि मामेतद् अपृच्छः ।

नवकुमारः—मृन्मयि ! चैतन्यहीनोऽहमासम् । कथय मृन्मयि सकृत् कथय—न त्वं विश्वासघातिनीति । रक्ष मां मृन्मयि रक्ष माम् । एहि गृहं गच्छावः ।

कपालकुण्डला—न पुनरहं गृहं गमिष्यामि । विश्वसिहि मां । नाहं विश्वासघातिनी । अद्य मया सह आलपन्ती ब्राह्मणवेशधारिणी पद्मावती त्वया दृष्टा ।

नवकुमारः—कथं पद्मावती ! मृन्मयि ! देवि ! क्षमस्व माम् । एहि गृहं गच्छावः ।

कपालकुण्डला—नाथ ! क्षमस्व माम् । त्वं गृहं व्रज । अहं भवानीचरणतले देहं परित्यक्तुं समागता । भवानीचरणतलमेवाश्रयिष्ये ।

नवकुमारः—नहि मृन्मयि ! नहि । क्षमस्व माम् । एहि गृहं गच्छावः । ( नवकुमारः कपालकुण्डलां हृदये स्थापयितुं बाहू प्रसारयति । सहसा तटमृत्तिकाखण्डं घोररवेण कपालकुण्डलया सह जले निपतति । ) अये भग्नं तटम् ! पतिता कपालकुण्डला ! मृन्मयि ! ( नवकुमारोऽपि उल्लम्फ्य जले निपतति ) । निष्क्रान्ताः सर्व्वे ।

समाप्तञ्चतत् कपालकुण्डलारूपकम् ।

# वेदान्तविमर्शः

[ निबन्धकः—श्रीचारुकृष्णदर्शनाचार्यः ]

( पूर्वानुवृत्तः )

इति स्मृतौ यथाकाशं जतुकाष्ठवन्नोपलिप्यते तथात्मनो नोपलिप्तत्वमुक्तं, नचाकाशं सर्वथा न सज्जते घटादिभिः संयुक्तत्वात्, अतो नोपलिप्यते इत्युक्तं नतु न सम्बध्यते इतीति विभाव्यम् । अथवा नासक्तत्वमसङ्गत्वम् ।

कृत्स्नप्रसक्त्यधिकरणे विकारकारिणोऽपि ब्रह्मणोऽप्रच्युतस्वरूपत्वं योगि-दृष्टान्तेनैव सूत्रकृता दर्शितम्, "आत्मनि चैवं विचित्राश्च ही"ति । यथा-नेकविग्रहग्रहणेऽपि योगिनां न स्वरूपव्याहतिः कथञ्चित् तथा विविधविचित्र-प्रपञ्चसृष्टावपि न लेशतोऽपि वैकल्यं ब्रह्मणः । तथा च स्मृतिः

"आत्मनो वै शरीराणि बहूनि भरतर्षभ ।
योगी कुर्याद् बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ।
प्राप्नुयाद् विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत् ।
संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिवेति ॥" इति

यथा वशिष्ठकामधेन्वा नानासेनासृष्टिः, यदि विविधविचित्रस्रष्टॄणामपि योगिप्रभृतीनां न स्वरूपवैकल्यं विकारदोषसंसृष्टत्वं नाण्वपि महाप्रभावत्वात् तदा यदुपासावशादीदृक्प्रभाववत्त्वं तत्सेवकानां कैव कथा तस्यैव निरतिशय-प्रभावबलैश्वर्यवैराग्यादिमतो भगवतो ब्रह्मणः स्वरूपावैकल्ये विकारासंसृष्टत्वे वा । यथाह श्रीभागवतम्—

"यत्पादपल्लवपरागनिषेवतृप्ता
योगप्रभावविधुताखिलकर्मबन्धाः ।
स्वैरं चरन्ति मुनयोऽपि न नह्यमाना-
स्तस्येच्छयात्तवपुषः कुत एव बन्धः ॥" इति

विवर्तवादे च न कृत्स्नप्रसक्त्याक्षेपस्यैव प्रसक्तिः, नहि सर्पेण रज्ज्वा वैकल्यलेशोऽपि। नचात्र स्वप्नदृष्टान्तेन व्याख्या युक्ता स्वाप्नार्थानां तुच्छत्वात् ज्ञानमात्रत्वाच्च तस्येति दर्शितं "सन्ध्ये सृष्टिराह ही"त्यधिकरणे इत्यलं प्रपञ्चेन।

प्रकृतमनुसरामः। प्रपञ्चस्य मिथ्यात्वे "द्वे एव ब्रह्मणो रूपे" इति नैव युज्यते, नहि मिथ्या कस्यचिद्रूपं भवति मिथ्यासर्पस्य रज्ज्वा रूपत्वाभावात्। जगतः प्रतिषेधे च "प्रकृतैतत् प्रतिषेधतीत्येव सूत्रं स्यात्, नतु प्रकृतैतावत्त्वं प्रतिषेधतीति, नायं सर्पो रज्जुरियमित्येव ब्रूते नतु सर्पस्यैतावत्त्वं नेतीति। यथा नेति नेतीति निषेधेन ब्रह्मणः प्रतिषेधे शून्यवादप्रसङ्गस्तथा जगतो निषेधेऽपि तद्वादप्रसङ्गः, शून्यवादिभिरेव जगतो मिथ्यात्वकल्पनात् निर्विशेषस्य शून्यस्य परमसत्यत्वमननाच्च। यथाह नागार्ज्जुनः—

"अलातचक्रनिर्माणस्वप्नमायाम्बुचन्द्रकैः।
धूमिकान्तप्रतिश्रुत्कामरीच्यद्भिः समो भवः॥" इति

नैवं वेदान्ताः, यथा "ब्रह्मविदाप्नोति परम्" "असन्नेव स भवति असद् ब्रह्मेति वेद चेत्"। इत्यादि महता परिकरबन्धेन वेदान्ते ब्रह्म प्रतिपाद्य न तत्प्रतिषेद्धुं युज्यते, तथा ततो वै सदजायत" "नामरूपे सत्यं प्राणा वा अमृतम्" तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद् वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी" "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म" तदैक्षत बहु स्यां प्रजायेय" "तत्तेजोऽसृजत"

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी॥"

इत्यादिना महता परिकरबन्धेन सत्यप्रपञ्चोऽपि प्रतिपाद्य न प्रतिषेद्धुं युज्यते। "कथमसतः सज्जायेते"तिप्रपञ्चसत्यतयैव जगत्कारणस्य सत्यत्वं प्रसाध्य पुनः प्रपञ्चस्यैव मिथ्यात्वप्रतिपादने जगत्कारणस्याप्यसत्यत्त्वमापत्तेत् व्यावहारिकसत्यादिश्च बौद्धानामेव न वेदान्तिनामिति दर्शितं प्रागेव। इत्यलंप्रपञ्चेन।

"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुहिरण्यकेश" इत्यादिवाक्यैर्ब्रह्मणो हिरण्यश्मश्रुत्वाद्यवगमेऽपि नाद्वैतहानिर्ब्रह्मणः सुवर्णवर्णस्वस्य

वेदान्तेषु सर्वत्रोद्घोषणात् तत्त्वदर्शिनोऽपि सुवर्णवर्णस्यैव ब्रह्मणो दर्शनात् तस्यैव जगद्योनित्वकीर्त्तनाच्च रूपोत्पत्तेः प्रागपि तस्य सुवर्णवर्णत्वस्यैव निश्चयात् सुवर्णवर्णत्वं नित्यसिद्धमेव नत्वारोपितम्। तथाच श्रुतिः—

"यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्"। इति श्रुत्यन्तरं च—"यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथा ग्न्यर्च्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तमिति। आलोचितमधस्तात्। मनुरपि ब्रह्मणः सुवर्णवर्णत्वमेवाह—

"प्रशासितारं सर्वेषामणीयांसमणोरपि।
रुक्माभं स्वप्नधीगम्यं विद्यात् तं पुरुषं परम्"॥ इति

मुक्तानां ब्रह्मलोके पर्यङ्कस्थस्य साकारब्रह्मणः प्राप्यत्वाभिधानाच्च। "अवर्णमचक्षुःश्रोत्रं तदपाणिपादमि"ति च सन्न्यासिनामेवोपासनार्थमुक्तं तेषां निराकारस्यैवोपास्यत्वात् भौतिकरूपहीनत्वाद्वा। कर्मिणां च पर्यङ्कस्थस्यैव ब्रह्मणः सपरिकरस्य यज्ञे उपास्यत्वात्। मुक्तौ ब्रह्मलोके ब्रह्मप्राप्तिश्च तयोस्तथैव तत्क्रतुन्यायादिति रहस्यम्।

अवच्छेदप्रतिविम्बवादयोर्योगसम्मतत्वान्न तयोर्वेदान्तसम्बन्धः "यथा ह्ययं ज्योतिरात्मा विवस्वान्" "एक एवहि भूतात्मे"ति वचनद्वयं च योगशास्त्रीयमेव न श्रौतमिति दर्शितमधस्तात्। अविद्यां चावैदिकीमुपाधीकृत्य विम्बप्रतिविम्बकल्पनापि स्वकपोलकल्पिता निर्मूला मायावादसिद्धैवेति मायावादेन दृढप्रलेपेनाच्छादिता वेदान्तास्तैर्वेदप्रद्वेषादिति विभाव्यम्। वेदान्ताश्च सर्गादिपरिणामिकारणमेव ब्रह्म तस्यैव च ध्यानात् कर्मणश्च निष्कामादात्मज्ञानान्मुक्तिरित्याहुः!

वेदान्तानां परमतात्पर्यं ब्रह्मणि, अवान्तरतात्पर्यं च सर्गादौ, "यतो वा इमानि भूतानि जायन्ते"इत्यादिश्रुतीनां सर्गादिकारणत्वेनैव ब्रह्मणः प्रतिपादनात्, यथा भोजनसुखस्य मुख्यप्रयोजनत्वेऽप्यन्नपाकादेः प्रयोजनत्वं गौणं तद्वत्। तस्माद् वा एतस्मादाकाशः सम्भूत" इत्यादिश्रुतिषु यथायथं सृष्ट्यभिधानात् "कथमसतः सज्जायेते"त्यादिश्रुतेश्च सृष्टिवाक्यानां जगत्सत्यत्वबोध एव तात्पर्यं बोध्यम्।

(क्रमशः)

श्रीश्रीतारकेश्वरसंस्कृतराष्ट्रभाषासम्मेलने स्वागतसभाध्यक्षाणां
महामहोपाध्यायश्रीकालीपदतर्काचार्यमहोदयानाम्

# स्वागतसम्भाषणम्

निबन्धकः—श्रीकालीपदतर्काचार्यः

( पूर्वानुवृत्तम् )

अथ का नाम तथाविधा भाषा या स्वीया च विविधगुणसन्तानेन भारत-राष्ट्रभाषापदस्वीकरणक्षमा चेति जाग्रत्यां प्रतिपक्षजिज्ञासायां सगौरवं सोपपत्तिकं निर्विकल्पं निष्पक्षपातं सुदृढञ्च वयं वदामः, सैषा संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिरिति। आसीदेषा कदाचिदतीतयुगे भारतस्य राष्ट्रस्य सर्वव्यवहारोपयोगिनी भाषा। तया चाजनिष्ट सुतरामिष्टं भारतवर्षस्य। सेयमशेषतया पवित्रायाः समृद्धायाः प्राचीनायाः सर्वक्षेमप्रसविन्याः सर्वस्या एव भारतसंस्कृतेः समाश्रयभूता। सेयं साक्षाद् वा परम्परया वा प्रसवित्री सर्वभारतीयभाषाणाम्। अस्ति तस्याः सकलमानवस्थितिसाधनं निखिलभुवनमान्यं शुभोदर्कं सुमधुरं साहित्यं, यत्र काव्यपुराणेतिहासस्मृतिदर्शनादीनि निखिलान्येव तन्त्राण्युपनिविशन्ते। तस्याः सर्वभुवनोत्तरेण माधुर्येण निर्जितं सर्वभाषामाधुर्यम्। सुसंस्कृतेयं नातिक्रामति क्वचिदार्षव्याकरणप्रक्रियाम्। प्रतिपादयत्यखिलं मानसार्थम्। निर्जरसोऽपि स्फूर्जितविवेका गुणातिशयपरिचयेन तामेव कुर्वन्ति स्वव्यवहार्याम्। अनयैव प्रतिपाद्यते नैकत्र स्वल्पप्रतीक्ययापि विचित्रप्रतिपाद्यवस्तुभूमा। नवीनशब्दसम्भारसंघटने दृष्टास्य लोकोत्तरा शक्तिः। सुप्रतीतमिदं नातिचिरात् प्रागेव भारतराष्ट्रीय-परिभाषा-ग्रन्थप्रचारेण। नैषा प्रादेशिकी, किन्तु सर्वभारतधरणीसाधारणी। समाद्रियते किलेयं मनसा वाचा वा निखिलैरेव भारतप्रभवैः प्रायेण। बहुधा बहुमन्यते

सा माहम्मदैरपि ससम्मदं तत्र दैवीं सम्पदं साहित्यप्रशस्तिञ्च सुमहतीं समीक्षमाणैः। नास्त्येव भारते वर्षे तथा प्रदेशो यत्र तदिदं संस्कृतमपाकृतमैकान्त्येन। भारतीयानां भाषान्तरनिष्णातानामपि यथा सुरसरस्वत्यामेव दृढो मदीयत्वाभिमानो न तथा सुदृढं परिचितायामप्यपरस्यां भाषायाम्। ततश्च—

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥

इति न्यायेन सेयमानन्दमयमैत्रीग्रन्थिः सर्वेषामेव भारतवास्तव्यानाम्। यदेव वेदाद्युपनिबद्धं मन्त्रपदमहितनिवृत्तिं हितप्रवृत्तिञ्च समुद्दिशन्तः श्रद्धया समुच्चारयन्तो दाक्षिणात्यप्रमुखाः प्रातः प्रबुध्यन्ते, नक्तं शयनमाश्रयन्ते, गृहाद् बहिश्च प्रतिष्ठन्ते, परेऽप्यास्तिका भारतीयास्तदा तदा तेनैव तत्तत् कृत्यमाचरन्ति। संस्कारक्रियादिषु यद् यदेव मन्त्रपदं दाक्षिणात्यादिप्रदेशप्रभवाणां, तत्तदेव वङ्गादिदेशवास्तव्यानाम्। तेन चैकगृहगतानामिव तदिदं संस्कृतमयं योगसूत्रमवलम्ब्य विभिन्नप्रदेशीयानामपि भारतीयानां सम्भाव्यते मिथो मैत्री। तस्मात् संस्कृतं मिथः संयोगसूत्रं सर्वभारतीयानाम्। यदि तत् संस्कृतं राष्ट्रभाषापदं ग्राहितं स्यात्, तदा भारतीयसर्वप्रदेशेषु सर्वैरेव भूयस्तया सममेव तस्य व्यवहारेण दृढेन च तत्र मदीयत्वाभिमानेन दृढतामुपगन्ता मैत्री, तस्य सर्वधरणीसाधारणस्य प्रादेशिकताविरहेण तस्य राष्ट्रभाषात्वस्वीकारे भारतराष्ट्राधिकारे नापद्येत देशविशेषपक्षपातदोषारोपो मिथः कलहावसरश्च भारतीयदेशविशेषाणाम्। हिन्दीभाषाया राष्ट्रभाषात्वस्वीकार इव विभिन्नप्रदेशीयजनसङ्घस्य विजिगीषामूलकपरीक्षादिव्यापारेषु देशविशेषनिवासप्रयुक्तविशेषाभावात्। संस्कृतस्यैव समुचितं राष्ट्रभाषापदमिति सुविचाररमणीयः पन्थाः।

किञ्च राष्ट्रेण स्वतन्त्रेण सता स्वीया विलक्षणरूपा संस्कृतिः सर्वथा समुन्नमयितव्या। यदि तेन तथाभूतेन नोन्नमिता संस्कृतिः स्वीया, किन्तर्हि कृतं तेन। विफलप्रवृत्तिस्तदा तस्य स्वातन्त्र्यलाभः। समाश्रयश्च संस्कृतभाषैव भारतीयपुण्यसंस्कृतेरशेषायाः, नत्वपरा काचिद्भाषा। भारतीयपुण्य-

प्राचीनसंस्कृतेराश्रयो रामायणमहाभारतादिग्रन्थजातं निबद्धं संस्कृत वाङ्मयेनैव, नापरेण, तद् यदि संस्कृतापरनामधेया सुरसरस्वती वर्द्धेत, तदा भारतसंस्कृतिरपि वर्द्धेत, तस्यास्तन्मयत्वात्। संस्कृतवर्द्धनमपहाय प्रकामं वृथैव कामः परिश्रमो वा भारतीयसंस्कृतिपरिवर्द्धनस्य। श्रुतचरं दृष्टचरञ्चेदं यत् यदा यावान् यावान् प्रसारः प्रचारश्च संस्कृतविद्यायास्तदा तदा तावती परिवृद्धिर्भारतसंस्कृतेरिति। विवृतमप्येतद् विस्तरेणाधस्तात्। तद् भारत-संस्कृतेः समुन्नतिविशेषाय भारतराष्ट्रेण संस्कृतमेव भारतराष्ट्रभाषापदं ग्राहयितव्यम्। एवं कृते न चिरादेव भारतसंस्कृतेः समुन्नत्या साफल्यं सुसम्पत्स्यते भारतराष्ट्रस्वाधीनतायाः। तद्वैपरीत्ये तु फलं विपरीतम्।

किञ्च संस्कृतविद्या नाम विशेषतः शीलशोधनी। सेयं 'तेन त्यक्तेन भुञ्जीथा, मा गृधः कस्यस्विद्धनम्' इत्याद्युपनिषन्मुखैरागमैस्त्यागशक्तिमुपदिशन्ती जगतो महाक्षेमं सम्पादयति। पाश्चात्यविद्या तु भोगमेव प्रायेण विद्याफलं ब्रुवाणा जनसङ्घं परमार्थात् प्रभ्रंशयति। तेनैव भोगप्रधानया पाश्चात्यविद्यया बहोः कालात् प्रभृत्येव त्यागप्रधानां संस्कृतविद्यामभिभूय प्रसरन्त्या समुत्पाद्यते विवृद्धं युद्धं राज्येन राज्यान्तरस्य पत्तनेन पत्तनान्तरस्य ग्रामेण ग्रामान्तरस्य जनसङ्घेन जनसङ्घान्तरस्य व्यक्तिविशेषेण चापरव्यक्तिविशेषस्य। प्रत्यहं प्रतिमुहूर्त्त-मिदं प्राचुर्य्येणैव परितः सन्दृश्यते। प्राचीने काले संस्कृतविद्याया ऋद्धियुगेऽपि तदिदमेकान्ततो नासीदिति नोच्यते, परम् अत्यल्पमात्रमेव तन्नातिमात्रम्, यत्र चैतत् समजनिष्ट, तत्र महान्तं प्रभावं व्यतनिष्ट चार्वाकसिद्धान्तस्तन्मूलक-पातंकाद्यभीतिश्च। आधिक्येन हि व्यपदेशा भवन्तीति नयेन बहुत्रैव संस्कृत-विदां बाहुल्येन विनयादिशीलशुद्धिसन्दर्शनात् अन्येषाञ्च प्रायेण तद्विपर्य्यय-पर्य्यवेक्षणात् संस्कृतविद्या त्यागशक्त्यादिप्रयुक्तिद्वारा सुतरां शीलशोधनीत्येव प्रतिभाति सुविचारप्रभवः सिद्धान्तः। एवं स्थिते यदिदं भारतराष्ट्रं प्रादेशिकानि च राज्यानि पाश्चात्यविद्यामात्रनिष्णातानां प्रतिपक्षसङ्घानां महता वरानुबन्धेनोपद्रुतानि भवन्ति, संस्कृतं राष्ट्रभाषा भवति चेत् न चिरादेव भारतराष्ट्रे संस्कृतविद्यायाः प्राचीनकालानुरूपसमृद्धिसमुदयेन

तद्वतामतिमात्रशीलशुद्ध्या सर्वमेव भारतराष्ट्रं शान्तिसौभाग्यमश्नुवीत। राष्ट्राकाङ्क्षितायाः शान्तेः समुदयाय राष्ट्रस्य प्रयासान्तरं नापेक्ष्येत। राष्ट्र-शान्तिसंरक्षणादिव्यपदेशेनान्तरान्तरा संख्यातीतजनविघातादिप्रसूत मनिष्ट-मपि परिह्रियेत। तदितोऽपि कारणविशेषात् संस्कृतभाषैव राष्ट्रभाषा-पदाधिकारयोग्या नापरा पाश्चात्त्यादिभाषेत्येव सुविवेकप्रसूतो राद्धान्तः।

(क्रमशः)

---

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

श्रीचैतन्यचरितामृते मध्यलीलायां

प्रथमः परिच्छेदः

( पूर्वानुवृत्तः )

एवं गृहीतसन्न्यासश्चतुर्विंशतिमब्दकान्।
प्रभुश्चकार यां लालां शेषलीलेति नाम सा ॥१२
द्वे नाम्नी शेषलीलाया मध्यान्त्या चेति भेदतः।
नामभेदं ब्रुवन्त्येवं लीलाभेदेन वैष्णवाः ॥१३
गौडे नीलाचले सेतुबन्धे वृन्दावने तथा।
तेषु षड्वत्सरानास्तां गमनागमने प्रभोः ॥१४
तत्र तत्र च या लीला मध्यलीलेति सोच्यते।
या लीला च ततः पश्चात् सान्त्यलीलाभिधीयते ॥१५

आदिर्मध्या तथान्त्या च तिस्रो लीला महाप्रभोः ।
इदानीं मध्यलीलाया विस्तृतिः क्रियते मया ॥१६
शिष्टानष्टादशाब्दांश्च तिष्ठन्नीलाचले प्रभुः ।
स्वयमेवाचरन् भक्तिं सर्वान् जीवानशिक्षयत् ॥१७
तेषां षड्वत्सरान् भक्तैर्नृत्य-गीतादिलीलया ।
नित्यं प्रवर्तयामास प्रेमभक्तिं महाप्रभुः ॥१८
नित्यानन्दः प्रभुस्तेन गौडदेशे प्रचोदितः ।
गौडानाप्लावयामास स प्रेमरसवन्यया ॥१९
कृष्णप्रेममदोन्मत्तो नित्यानन्दः स्वभावतः ।
प्रेमाणं यत्र तत्रासौ प्रददावाज्ञया प्रभोः ॥२०
तस्य श्रीचरणाम्भोजे कोटिः प्रणतयो मम ।
यश्चैतन्यपदे भक्तिं विश्वैरग्राहयद्गणैः ॥२१
यं श्रीचैतन्यगोस्वामी प्रोचे ज्येष्ठसहोदरम् ।
प्रभुर्मे कृष्णचैतन्य इति सोऽपि सदावदत् ॥२२
यद्यप्येषोऽभवच्छ्रीमान् बलरामः प्रभुः स्वयम् ।
चैतन्यदासमात्मानमभिमेने तथाप्यसौ ॥२३
सदा सेवस्व चैतन्यं तन्नाम ब्रूहि गाय च ।
भजने यो हि चैतन्यं स एव मम जीवनम् ॥२४
इत्थं चैतन्यभक्तिं स ग्राहयामास मानवैः ।
सर्वांश्चोद्धारयामास दीनान् हीनांश्च निन्दकान् ॥२५
सनातनोऽथ रूपश्च प्रभुणा प्रहितौ व्रजम् ।
तौ वृन्दावनमायातौ भ्रातरौ द्वौ तदाज्ञया ॥२६
प्रकाशितानि तीर्थानि भक्तिस्ताभ्यां प्रचारिता ।
सेवा मदनगोपाल-गोविन्दयोः प्रवर्तिता ॥२७
नानाशास्त्राणि संगृह्य भक्तिग्रन्थनिधिः कृतः ।
मूढपामरलोकानां निस्तारो विहितस्ततः ॥२८

विचारः सर्वशास्त्राणां कृतस्ताभ्यां तदाज्ञया ।
गूढो रसो व्रजस्यैवं समन्ताच्च प्रचारितः ॥२६
हरिभक्तिविलासश्च वृहद्भागवतामृतम् ।
चरित दशमस्थञ्च दशमस्कन्धटिप्पनीम् ॥३०
श्रीसनातनगोस्वामी ग्रन्थानेतांश्च निर्ममे ।
चक्रे यान् रूपगोस्वामी कस्तान् गणयितुं क्षमः ॥३१
प्राधान्येन तु केषाञ्चिन्नाम निर्दिश्यते मया ।
तेन व्रजविलासर्द्धिः श्लोकलक्षेण वर्णिता ॥३२
स रसामृतसिन्धुञ्च चक्रे विदग्धमाधवम् ।
तथोज्ज्वलनीलमणिं श्रीमल्ललितमाधवम् ॥३३
स्तवस्तवकराजिञ्च श्रीदानकेलिकौमुदीम् ।
॥३४
तत्तल्लक्षणयुक्ताञ्च गोविन विरुदावलीम् ।
श्रीमन्माथुरमाहात्म्यं तथा नाटकलक्षणम् ॥३५
भागवतामृतादीनि कः संख्यातुमिहार्हति ।
व्रजलीलाविलासानामस्ति सर्वत्र वर्णना ॥३६
श्रीजीवो नाम गोस्वामी तयोर्भ्रातृसुतोऽभवत् ।
अनन्ता रचिता भक्तिग्रन्थास्तेन महात्मना ॥३७
श्रीभागवतसन्दर्भो नाम ग्रन्थोऽतिविस्तृतः ।
भक्तिसिद्धान्तसारो हि तत्र तेन प्रदर्शितः ॥३८
नाम्ना गोपालचम्पूश्च कृतो ग्रन्थो महाबलः ।
यत्र व्रजरसैः पूर्णा नित्यलीला प्रकाशिता ॥३९
एवं बहुविधान् भक्तिग्रन्थान् सम्यक् प्रकाशयन् ।
अध्यवात्सीत् सगोष्ठीकः श्रीवृन्दावनधाम सः ॥४०

( क्रमशः )

# राजयक्ष्मचिकित्साविमर्शः

( पूर्वानुवृत्तः )

निबन्धकः कविराज-श्रीमुरारिमोहन घोष. ए, एम., भि, आयुर्वेदाचार्य
आयुर्वेदमहोपाध्याय-काव्यतीर्थ-वेदान्तशास्त्री

यक्ष्मरोगविषये तच्चिकित्साविषये च प्राचीनपुस्तकाध्ययनादस्माभिः समधिकं ज्ञानं लभ्यम्। तत्तद्विषये पुरातनपुस्तकानाम् अनुसन्धानमपि करणीयमेव। यक्ष्मरोगादारोग्यलाभो नासम्भवः। रोगप्रतिकारव्यवस्थया सहास्माकं कार्य्य-पथोऽपि चिन्तनीयः। रोगपरीक्षाभवनं भेषजनिर्व्वाचनं स्वास्थ्यनिवासश्चेत्येतानि रोगनिर्द्धारणविषयेऽतीव प्रयोजनीयानि।

यक्ष्मरोगपरीक्षाभवनं च साधारणसुगन्धिपुष्पवृक्षपरिशोभिते विशुद्धालोक-वायुसमन्विते निर्ज्जने क्षेत्रादौ स्थापनीयम्। भेषजनिर्व्वाचनविषये च आयुर्व्वेदमतमेव पालनीयम्।

बहुदर्शितपस्विगणात् प्रायशो ज्ञायन्ते यक्ष्मरोगस्याश्चर्य्याणि भेषजानि। तत्सकाशात् यानि वनजानि धातवभेषजानि प्राप्यन्ते तानि यथायथं निर्माय यथायथभावेनैव प्रयोज्यानि रोगिणां स्वास्थ्यनिवासारोग्यनिकेतनादिकञ्च लोककोलाहलपरिपूर्णं नगरं विहाय शान्तिपूर्णेषु स्थानेषु स्थापनीयम् आरोग्य-निकेतनस्य कर्मधारा धर्ममूलकनीतिमेवावलम्बय सम्पादनीया।

सापि च कर्मधारा पुनर्व्यस्ततहीना भवितुमर्हति। आश्रमं मन्यमानै-रोगिभिस्तत्र दैहिकबलानुसारेण उद्यानकर्म-प्राणायाम-देवार्च्चनानि कर्त्तव्या-न्येव। आरोग्यनिकेतनस्यानतिदूरे सार्व्वजनीनं मन्दिरमेकम् अथवा भगवदारा-धनास्थानं किञ्चित् कारयितव्यम्। एषा व्यवस्था न केवलं रोगिणाम्; आरोग्यनिकेतनस्य परिचारक-परिचारिका-चिकित्सकानामपि। नचेत् चिकित्-सकानामाचारेणामुग्धैः यक्ष्मरोगिभिः मानसिकी प्रफुल्लता अलभ्या स्यात्। वस्तुतोऽस्माकं यक्ष्म-रोगारोग्यनिकेतनं जगतामादर्शस्वरूपं विधातव्यम्।

ये रोगिणो मुमूर्षवस्तेषां मृत्युभयनिवारणाय यथासम्भवं भेषजसेवनात् परं प्रातः सन्ध्यायाञ्च परिचारिकाभिः एवं पठनीयं श्रावणीयञ्चेति— 'वासांसि जीर्णानीत्यादि'। यक्ष्मरोगस्य प्रथमावस्थायां रोगिणां दीर्घश्वास-ग्रहणं तदुपयुक्तं श्वासबहिष्करणञ्च प्रधानं भेषजम्। प्रथमावस्थायां यक्ष्मरोगः समूलं नाशमेति प्राणायामव्यवस्थया। वैद्यजीवप्रणेतृभिरा-युर्व्वेदशास्त्रविद्भिः लोलिम्बराजैः उक्तं कुत्रचित् यक्ष्मरोगविषये "क्षयोत्-पत्तिविनाशाय सिंहास्यं सेव्यतां सदा। यक्ष्मरोगविनाशाय—सर्व्वथा रोगिभिर्वृषः। स्वरसस्तत्क्वाथश्च सेव्यं किं पुनरन्येषु भेषजेषु सेवितेषु।

अत एव यथाकालं नियमानुरूपञ्च निर्मितेन निरुक्तरूपेण भेषजेन सेवितेन समुचितपथ्यसेविनां यक्ष्मरोगिणां रोग उपशाम्यति इति मे हृदयम्।

---

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. Re. 1-8 ; Re, 1-4 ( for members ).

14. **Nala-damayantiyam** ( a new Drama ) of MM, Kalipada Tarkacharya. Rs. 1-8 ; Rs. 2 ( for members ).

15. **Prashastapada-bhashyam**—Edited by MM, Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2 ; Re. 1-8 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr, Pashupatinath Shastri M. A,, B. L., Ph. D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; Rs. 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM, Kalipada Tarkacharya. Rs. 7 ; 6 ( for members).

21 **Manodutam** of Vishnudasa—Ed. by prof. Chintaharana Chakravarti, M. A. Re. 1-4 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs, 2 ; Re. 1-8 ( for members).

23. **Devisatakam** of Mahmahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., As. 8.

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kali pada Tarkacharya, Rs. 5 ; Rs. 4-8 ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re. 1-8 ; Re. 1-4 ( for members ).

---

## अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनस्य

# आवेदनम्

अखिलभारतसम्मानिता संस्कृतभाषा यथा भारतराष्ट्रस्य राजभाषात्वेन परिगणिता स्यात् तदर्थं १६५८ खृष्टाब्दीये मे-मासे युगाचार्य-श्रीश्रीसीतारामदासोङ्कारनाथचरणानां प्रधानाध्यक्ष्येण कलिकातामहानगर्यामेकमखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनमनुष्ठितम्। तत्र तदीयोद्देश्यसाधनाय काचित् साधारणपरिषत् काचित् कार्यनिर्वाहकपरिषच्च सुसंघटिते। तत्र तत्र सर्वेषां भारतहितैषिणां यथासम्भवं सदस्यपदाधिकारेण सर्वथा साहायकविनियोगः सम्प्रार्थ्यते।

तत्र साधारणसदस्यपदाधिकाराय प्रतिवर्षमेकं रूप्यकं कार्यनिर्वाहकसदस्यपदाधिकाराय च रूप्यकत्रयं सम्पादकसविधे दातव्यम्।

विनीत—

स्थानसङ्केत :— श्रीनिर्मलचन्द्रदासगुप्त-

३नं शम्भुनाथपण्डित ष्ट्रीट् श्रीनगेन्द्रनारायणचतुर्धुरीणयोः

कलिकाता-२० सम्पादकयोः

## तत्र विशिष्टकर्माध्यक्षाः :—

पूज्यपाद—श्रीश्रीसीतारामदासोङ्कारनाथमहाराजः ( सभापतिः )

डाः—श्रीनलिनीरञ्जनसेनगुप्त एम-डि महोदयः ( कार्यनिर्वाहकसभापतिः )

विचारपति—श्रीरमाप्रसादमुखोपाध्याय एम्-ए. वि-एल् ( पृष्ठपोषकः )

श्रीश्रीजीवन्यायतीर्थ—श्रीचपलाकान्तभट्टाचार्य एम्-ए—श्रीवसन्तकुमारचट्टोपाध्याय एम्-ए प्रमुखाः ( सहसभापतयः )। उक्तौ सम्पादकौ च।

---

Printed by Bishnupada Bhattacharya M. A. Kavyatirtha. at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghosc Lane, Calcutta and published by the same form Sanskrit Sahitya parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta.

Reg. No. C 1073



Vol. XXXX. No. 9

४०श-वर्षस्य ६म-संख्या

January 1958

१८७९शकीये पौषे मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—1-4d

# Sanskrit Sahitya Parishat Series

(Revised up to December, 1957)

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM.Kali pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members

(Cont. to Cover 3rd Page)

---

Printed by Bishnupada Bhattacharya M.A. Kavyatirtha.at Calcutta Oriental Press Private Ltd., 9, Panchanan Ghose Lane, Calcutta and published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta-4,

इयं संस्कृत-साहित्य-परिषत् प्रतिमा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXX. No. 9 | १८७९-शकीये पौषे ४०श-वर्षस्य ९म-संख्या | January 1958.

## मतिमञ्जरी

### अखिल-भारतीय-प्राच्यसम्मेलनम् ।

(All India Oriental Conference.)

[ निबन्धकः—श्रीयादवेन्द्रनाथ-राय-न्यायतर्कतीर्थः ]

सुसमाहितं महता समारोहेण देहलीनगर्यामेकोनविंशवार्षिकमखिल-भारतीयं प्राच्यसम्मेलनं दिसम्बरमासस्य सप्तविंशतितमतारिकामारभ्य दिवसत्रयेण । एतस्योद्घाटनावसरे राष्ट्रपतिना श्रीराजेन्द्रप्रसादमहोदयेन प्राचीनविदुषः प्रति यदनुरागविशेषं प्रदर्श्याभिहितं तदुदर्कशुभावहं हृदयहारि च । विद्याध्ययनोत्तरं गृहीतविद्यानां समाजस्य देशस्य च भूत्यर्थं किञ्चित् कर्तव्यमस्ति तन्न विस्मर्तव्यं विद्वद्भिः । तथाचेतिहासकारैविशिष्टानां जनानां विशेषतो राज्ञां जननमरणयोर्युद्धेषु जयपराजययोश्च वर्षमास-तिथीनां महतावधानेन गणना कृता, तेषां जीवनचर्य्योपरि कापि समालोचना तु न कृता । सामाजिकैस्तु तत एवं ग्रहणीयं यदनेन स्वजीवने कीदृशं कर्म सम्पाद्य किं किं फलमासादितम् । एवं समालोच्य विमृश्य च जीवनं

सुखसमृद्धिसम्पन्नं कर्तव्यमित्यादि। सत्यमिदमधुनास्माभिर्यद् यच्छास्त्रमधिगम्यते ततः सारं संगृह्य नागरिकजीवनसेवायां न प्रयोक्तुं शक्यते सुचिरं पराधीनतयास्माकं भारतीयसंस्कृतिर्विलुप्तप्राया दरीदृश्यते, भारतस्य तां तां सर्वजगतकल्याणसाधिकां संस्कृतिं समुद्धृत्य यदि समाजसेवायां प्रयोक्तुं शक्यते तदैव विद्या सुसिद्धा भवितेत्यत्र नास्ति सन्देहप्रसरः। किन्त्वस्माकं दृष्टिरतीव कलुषिता जाता; यया वयं प्राचीनसंस्कृतेः स्मरणेन लज्जामनुभवामः। सत्यप्रतिष्ठया सतीत्वमाहात्म्यं त्यागमहिमानं विद्यागौरवं जनसेवाव्रतादिकं भारतीयं वैशिष्ट्यं यावन्नासादयितुं प्रभवामस्तावत् कुतः स्वाधीनतासुखम्?

एकं तावद्दर्शनीयमनुभवनीयञ्च यदस्मिन् भारतीयप्राच्यसम्मेलने नैकस्यापि प्राचीनसंस्कृतिप्रतिभूभूतस्य महामहोपाध्यायस्य तत्कल्पस्य वा सम्माननं जातम्। कारणमस्माभिर्नाकलयितुं पार्यते। यथा तथा वास्तु सन्ततं दृश्यतेऽस्माभिः प्राचीनभारतीयसंस्कृतेः संस्कृतभाषाया आर्यसमुन्नतेरार्षज्ञानस्य च प्रशंसनमभिनन्दनञ्च। किन्तु तेषु कस्याप्यनुवर्तनस्पृहा सदाचारसमनुष्ठानप्रयासो वा न क्वापि परिलक्ष्यते। एवं क्रमेण मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यदवस्थितञ्चेद् भारतीयं वैशिष्ट्यं मर्यादा वा कियत्परिमाणं वा कियत्कालं वा जगति स्थातुमर्हति तदेतच्चिन्ताविषयः। अस्तु नाम भारतीयसंस्कृतेर्विलुप्तिर्जगतः, का नो हानिरिति चेत् तत्रापि चिन्तायाः सम्यगवसरो देयः। या भारतीयसंस्कृतिरेकैव जगति शान्तिसंस्थापनसमर्था तस्या विलोपेन रणोन्मत्तानां निहतस्वजनानां वा समाश्वासनार्थं का नाम संस्कृतिः को नामापदेशः समुपस्थास्यति? अधुना लुप्तसर्वसद्भावप्रायेऽपि जगति ये कति नाम शुभचिन्तका विराजन्ते तेषामादर्शेन शुभानुध्यानेन च जगत् शुभाशुभमिश्रफलं प्रसूते। भारतीयादर्शनानुप्राणिता देशान्तरस्था भारतीया वा मध्यस्थाः सदादर्शाभावेन कं वानुवर्तिष्यन्ते? अतएव स्वाधीने भारते विविधसंकटाकुलेऽपि चित्तशुद्धिद्वारा जगतकल्याणार्थं नेतृस्थानीयानां

किञ्चित् करणीयमस्ति नवेति विचारपदवीमवगाहते। एतेनैवेप्सित-दुर्नयप्रतिरोधः सम्भविष्यति नान्यथा! सर्वथा भारतीयप्राच्यसम्मेलन-रक्षणपरायणैरनुष्ठातृभिरेतद्विमर्शनीयम्। एतेभ्यः सविशेषं साधुपादं प्रदाय सर्वेषां कल्याणं जगतश्च शांतिर्भूयादितीशसमीपे प्रार्थ्यते।

---

# कपालकुण्डला-रूपकम्

( पूर्वानुवृत्तम् )

अधिकारी—अनेन पथिकेन सह देशान्तरं व्रज। ( कपालकुण्डला सकृत अधिकारिमुखं विलोक्य मस्तकमवनमय्य चिन्तां नाटयति ) मातः किं चिन्तयसि ?

कपालकुण्डला—तात ! इतः प्राक् यदा ते शिष्यः कश्चित समागतः तदा तेन सह गन्तुमहमैच्छम्। तदा त्वया उक्तम्—"ईदृशेन युवकेन सह युवत्या गमनं न युक्तम्।" इदानीं कथं वा गमनाय आदिशसि ?

अधिकारी—मातः ! नासीत् तदा ते कापि जीवनस्य आशङ्का।
अपिच—श्रुतं त्वया यदयं ब्राह्मण इति ?

कपालकुण्डला—अथ किम्।

अधिकारी—तद् यद्यसौ विवाहविधिना त्वाम् उपयम्य नयेत् तदैव सर्वथा मङ्गलम्।

कपालकुण्डला—विवाहः ! स कीदृशः ? तत्र किं करणीयम् ?

अधिकारी—विवाहः स्त्रीजनानामेक एव धर्मसोपानम्। अतः स्त्री सह-धर्मचारिणीति कथ्यते। जगज्जननी कालिका अपि शिवेन परिणीता।

कपालकुण्डला—अपि एवम् ? तर्हि विवाह एव भवतु।

अधिकारी—मातः ! गच्छ सत्वरं पुष्पपात्रमानय। शुभाशुभनिरूपणाय देव्यै अर्घ्यं प्रयच्छामि।

कपालकुण्डला—यथाज्ञापयति तातः। ( निष्क्रान्तः )

अधिकारी—अहो रक्षणीयाद्य मे प्रकृतिमधुरा माता कपालकुण्डला। (ततः प्रविशति नवकुमारः ) एतु एतु महाभाग ! इदमासनमास्यताम्।

नवकुमारः—यथाज्ञापयति आर्यः ( उपविशति )

अधिकारी—भवतः परिचयादिकं ज्ञातुमिच्छामि।

नवकुमारः—अहं ब्राह्मणः !

अधिकारी—वयमपि ब्राह्मणाः। न तु उत्कलान् ब्राह्मणान् मन्यतां भवान्। वंशेन वयं कुलाचार्याः। सम्प्रति देवीपादसेवायामहं नियुक्तः। अथ किंनामधेयो भवान् ?

नवकुमारः—श्रीनवकुमारशर्मा।

अधिकारी—कुत्र निवासः ?

नवकुमारः—सप्तग्रामे।

अधिकारी—को भवतः सामाजिक-परिचयः ?

नवकुमारः—वन्द्यघटीया वयम्।

अधिकारी—कति विवाहाः !

अधिकारी—( आत्मगतम् ) कुलीनवंशधरस्य विवाहद्वये का बाधा ? ( प्रकाशम् ) भद्र नूनं रक्षितस्त्वम् अद्य मे मात्रा !

नवकुमारः— अथ किम्।

अधिकारी—तत्—भवतः प्राणरक्षार्थं मृत्युं नाजीगणद्धि या, संरक्षणाय तस्यास्त्वं किं तावत् कर्त्तुमिच्छसि ?

नवकुमारः—महाभाग !

मम प्राणैस्तु तत्प्राणान् इच्छामि परिरक्षितुम्।
कृतघ्नतादोषदुष्टैः प्राणैः किं स्यान्मलीमसैः॥

तत् तस्यैव नरहन्तुः समीपम् उपगम्य आत्मसमर्पणं कुर्याम्।

अधिकारी—वातुलस्त्वम्। तेन किं भविष्यति। तवैव प्राणसंहारः। परं कपालकुण्डलां प्रति कापालिकस्य क्रोधोपशमो न भविता।

( विचिन्त्य ) अत्र केवलम् एक एव उपायो वर्तते।

नवकुमारः—कीदृशः सः?

अधिकारी—भवता सह कपालकुण्डलायाः पलायनम्—परं तदपि दुर्घटमेव। अतो मन्ये कपालकुण्डलाया अदृष्टं न शुभमिति।

नवकुमारः—कथं मया सह पलायनं तावत् दुर्घटमिति?

अधिकारी—श्रूयताम्—कस्य इयं कन्या, कस्मिन वंशे जाता, कीदृशं वा चारित्रमस्या एतद्विषये न किमपि जानाति भवान। तत् किं भवान एनां सहचरीं करिष्यति? भवतु वा सहचारिणीयं, किं भवान स्वगृहे अस्याः स्थानमनुमंस्यते? स्थानमस्या नानुमतं चेत कुत्र वा इयमनाथा गमिष्यति?

नवकुमारः—मम जीवनदायिन्याः कृते न विद्यते किमपि अकार्य्यम्। एषा मम परिजनस्थानमधिकरिष्यति।

अधिकारी—भवतु तावत परं यदा भवतः स्वजनाः प्रक्ष्यन्ति,—केयं कस्य वा वनिता इति। तदा किमुत्तरं दास्यति?

नवकुमारः—भवान यादृशमस्याः परिचयं दास्यति तादृशमेव वक्ष्यामि।

अधिकारी—साधु। परं पक्षकालगम्योऽयं पन्थाः। तत अज्ञात-चरित्रेण युवकेन सह कथमहमेनामनूढां कन्यामेकाकिनीं दूरदेशे प्रेरयामि?

नवकुमारः—तत भवान अपि मे सहचरोभवितुमर्हति।

अधिकारी—मयि गते कस्तावद् भवानीपूजां करिष्यति?

नवकुमारः—तत किं कोऽपि उपायो विधातुं नैव शक्यते?

अधिकारी—अस्ति एक एव उपायः। स तु भवत औदार्यगुणमपेक्षते।

नवकुमारः—कीदृशः स? कथ्यताम्। किमहं तत्र पराङ्मुखः?

अधिकारी—श्रूयताम्,—ब्राह्मणवंशसम्भूतेयं कपालकुण्डला बाल्ये दुरन्तखृष्टीयानदस्युभिरपहृता सागरतीरे परित्यक्ता। कापालिकस्तु एनां प्राप्य स्वयोगसिद्धये पालयामास। अचिरमेव तेन स्वप्रयोजनं सम्पादयितव्यम्। अद्यापीयमनूढ़ा। परमपवित्रं खलु अस्याश्चारित्रम्। यदि भवान एनां उपयम्य गृहं नयति तदा न कोऽपि किमपि वक्तुं शक्नुयात। अहमेनां यथाशास्त्रं भवते सम्प्रदास्यामि।

नवकुमारः—एवमस्तु।

( ततः प्रविशति पुष्पभाजनहस्ता कपालकुण्डला )

अधिकारी—मातः आगच्छ। इह उपविश। देव्यै अर्घ्यं दास्यामि।

( अर्घ्यमादाय )

मातः प्रपन्नार्तिहरासि सर्वदा
भृशं विपन्नाद्य कपालकुण्डला।
विधेहि विश्वेश्वरि तत सुमङ्गलं
गृहाण चार्घ्यं विनिवेदितं मया॥ (अर्घ्यं प्रदाय सानन्दं)

मातः पश्य देवी अर्घ्यं गृहीतवती। यद्धि विभाव्य मनसि अर्घ्यं दत्तम् तत तु मङ्गलमेव। वत्स नवकुमारः। इतस्तावत्। मातः कपालकुण्डले! इतस्तावत।

(कपालकुण्डलाया हस्तं नवकुमारस्य हस्ते प्रदाय)

वत्स! गृह्यतामियं सहधर्माचरणाय।

नवकुमारः—गृभ्णामि ते सौभगत्वाय हस्तं
मया पत्या जरदष्टिर्यथासः।
भगो अर्यमा सविता पुरन्धि
र्मह्यं त्वादुर्गार्हपत्याय देवाः॥

अधिकारी—(नवकुमाराभिमुखो भूत्वा) वत्स! अद्यारभ्य कपालकुण्डला ते धर्मपत्नी। ( कपालकुण्डलाभिमुखो भूत्वा ) मातः अधुना पतिरेव ते धर्मः।

नवकुमारः—अनुगृहीतोऽस्मि ।

कपालकुण्डला बाला धर्मपत्नी ममास्त्वियम् ।
कृतेऽस्या नास्ति मे दुःखं संसारमपि मुञ्चतः ॥

( निष्क्रान्ताः सर्वे )

---

# द्वितीयोऽङ्कः

[प्रथमं दृश्यम्]

( ततः प्रविशति वनपथेन गायन् कश्चन भिक्षुकः )

शङ्करसुन्दरि तारे !

तवाभिलषितं, किमपि न विदितं
कस्यापि हि संसारे ।

निहंसि कञ्चिद् रक्षसि कञ्चिन
निमज्जयसि पुनरन्यम्

कालकेतुरथ तव पदमलभत
काम्यं यदपि पुरारेः

स्वयं विपन्नं विधाय वणिजं
पासि ततः श्रीमन्तम्

अन्तिमकाले तव पदकमले
लीये करुणासारे ॥

( निष्क्रान्तः )

---

द्वितीयं दृश्यम्

[ पान्थशालायाश्चत्वरम् ]

( ततः प्रविशति नवकुमारस्य स्कन्धमवलम्ब्य मतिः )

नवकुमारः—मध्येमार्गं क्रमपरिगतं वाहका मां विहाय
नीत्वा कान्तां सह शिविकया पान्थशालाप्तिहेतोः ।
तूर्णं याता पथि पुनरहं दस्युकर्माणि दृष्ट्वा
जातोत्कण्ठश्चपलचरणः पान्थशालां प्रयामि ॥

मतिः—भद्र, कियति दूरे पान्थशाला वर्तते ?

नवकुमारः—अन्तिक एव ।

मतिः—हन्त ! दस्युप्रयुक्तेन लगुड़ाघातेन पाददेशे मे वेदना सञ्जाता। नालमस्मि दूरं गन्तुम् ।

नवकुमारः—भद्रे इयं पान्थशाला । तावत् प्रविशावः ।

( मतिस्तत्रैव कथञ्चित् तिष्ठति । नवकुमारः कानिचित् पदानि गत्वा पान्थशालाद्वारमासाद्य ) कः कोऽत्र भोः

दीनदासः—( प्रविश्य दीपहस्तो नवकुमारं दृष्ट्वा सानन्दम् )
अये देवः प्राप्तः ! देव । प्रणमामि (प्रणमति)

नवकुमारः—दीनदास ! निर्विघ्नं सर्वम् ?

दीनदासः—देव ! अथ किम् ? भवद्दर्शनेन निरुद्वेगा वयम् ।
अन्धकाराच्छन्ने मार्गे गतिस्ते चिरायिता स्यादिति
आकलय्य भवदर्थमस्माभिरेव गृहमेकं नियुक्तम् ।
तत्रास्ते कुशलिनी माता ।

नवकुमारः—वत्स ! पान्थशालास्वामिनं द्रष्टुमिच्छामि ।

दीनदासः—यदाज्ञापयति देवः ।

( निष्क्रम्य पान्थशालास्वामिना पुनः प्रविश्य ) भद्र ! एषोऽस्मत्स्वामी भवद्दर्शनार्थी वर्तते ।

पान्थशालास्वामी—भद्र ! नमस्ते ।

नवकुमारः—जयोऽस्तु । (दीनदासं प्रति) वत्स त्वमिदानीं विश्राम-सुखं लभस्व ।

दीनदासः—यदाज्ञापयति देवः (इति दीपं परित्यज्यैव निष्क्रान्तः)

पान्थशालास्वामी—भद्र ! किमर्थं वयमाहूताः ।

नवकुमारः—भद्र ! इयं मम सहचारिणी पथि दस्युभिराक्रान्ता महान्तं क्लेशमनुभूतवती । परिजनाश्चास्याः केचित नष्टाः निहताश्च । तदस्याः कृते गृहमेकं भवतो नियोक्तुमिच्छामि । यावदस्याः परि-जना नागमिष्यन्ति तावद् इयमत्रैव स्थास्यति ।

पान्थशालास्वामी—यदादिशति महाभागः तत्तथैव भविष्यति । अचिर-मेवाहं दासान् आहूय यथास्याः कथमपि क्लेशो न भवति तथैव विधास्यामि (निष्क्रान्तः)

नवकुमारः—(दीपालोकेन मतिं दृष्ट्वा सविस्मयं स्वगतम्)

कैषा बाला प्रकृतिचपला पक्वबिम्बाधरोष्ठी
वासन्ताम्रोद्गतकिशलयश्यामवर्णातिरम्या ।
नेत्रश्चास्या लसति मदनस्वप्नशय्येव साक्षात
लावण्यश्रीर्निवसति परा कापि चास्याः शरीरे ॥

मतिः—(विस्मितं नवकुमारं दृष्ट्वा सस्मितं) किं मम रूपम् आलोकयति भवान ?

नवकुमारः—(स्वगतम्) धिक् व्रीडितोऽस्मि ।

मतिः—किं भवता कदापि ललना न दृष्टा ? अथवा परमसुन्दरीं मां मन्यते ?

नवकुमारः—(आत्मगतम्) अहो अतिमुखरेयं रमणी । तत् कथं मुखराया उत्तरं न दास्यामि । (प्रकाशम्) मया ललना दृष्टा परम् एतादृशी सुन्दरी न दृष्टा ।

मतिः—न क्वापि ?

नवकुमारः—न क्वापि इति वक्तुं न शक्यते ।

मतिः—प्रियं मे प्रियं । किं सा भवतो गृहिणी ? (क्रमशः)

---

# प्रत्यूष-वर्णनम्

निबन्धकः—अध्यापक-श्रीदुर्गादास-गोस्वामी, एम॰ ए., साहित्यशास्त्री

स्तब्धा भूमिरचेतनेव तरुणी मुग्धा स्फुरत्यस्फुटा
तारा: कोरकिताः सुपाण्डुररुचो लुप्ता नभः-प्राङ्गणात।
शोष्योऽसौ शशलाञ्छनोऽपि शनकैराशां श्रितः पश्चिमा-
मस्ताद्रेः पतति स्वयं विरहिणीवक्त्रश्रियेवार्दितः ॥१

मेघौघः प्रविलीयते लघुगतिः खे स्फीततूलोपमो
गाम्भीर्येण समं तमः सुनिविडं नैशं परिक्षीयते।
गुञ्जन्ति भ्रमराः कलं खगरुतं जागर्ति विष्वङ् मुहु-
र्म्लाना दीपशिखाः स्ववृन्तशिथिलोद्भ्रान्तानि पुष्पाण्यपि ॥२

वायुर्वाति मृदुः परागसुरभिः प्रत्यूषजः कौमुदी
याति श्रीः सरसि स्फुटन्ति कमलान्याभाति रागच्छटा।
प्राचीदिग्वदने त्यजन्ति शयनं धर्मार्थिवृद्धार्भकाः
सुप्तौ सम्प्रति दम्पती घनतराश्लिष्टौ मिथस्तिष्ठतः ॥३

छायाच्छन्नपथेष्वटन्ति शकटाः पान्थाश्च यान्ति क्वचित्
क्षेत्रेषु त्वरते कृषीवलकुलं छात्राः स्वपाठे रताः।
चिन्वन्ति प्रमुदा प्रसूननिवहान् पूजार्थिनः कानना-
न्युन्मीलत्यपि देवसद्मसु जगन्मङ्गल्यमारात्रिकम् ॥४

सङ्केतध्वनिरुच्चरत्यतिगुरुः पौरेषु यन्त्रालये-
ष्वामर्दाज्जनताकृतः कलकलो विस्तीर्यते वर्त्मसु।
नानाद्रव्यसमृद्ध-हृद्यविपणीश्रेणीषु च प्रोद्धते
यात्रां प्रक्रमते दिनस्य निखिलैर्जीवैर्विवस्वानपि ॥५

---

# योगिभक्तचरितम्

## तृतीयः सर्गः

### ( पूर्वानुवृत्तम् )

व्याख्याने बहुविश्रुतस्य जनताश्रद्धां समाकर्षत
स्तावद्भूरिगुणेन कृष्टमनसः केचिन्नवीनाशयाः ।
सिद्धब्राह्मसमाजनायकवराः कृत्वा तदभ्यर्थनां
ब्राह्मं धर्ममनेन देशमभितः प्राचारयन्नुद्गतम् ॥१६

सोऽपि ब्रह्मविदां वरः सुमधुरव्याख्यां तदा वर्तयन्
लोकानां मनसस्तमो व्यघटयत् प्रापच्च दिव्यं यशः ।
किन्तु प्रैक्षत यावदेष बहुधा सोऽयं समाजः प्रियं
स्वं धर्मं विरुणद्धि तावदजहात्तं धर्मभीतो महान् ॥२०

युगाचार्यः सोऽयं तदवधि हरिं शाश्वतशिवं
सदा ध्यायन् विद्याविहततिमिरो धीरहृदयः ।
परां भक्तिं प्राप्तो भवविभववैराग्यकलितो
जगन्नाथं भेजे स्वविरचितगीतैर्मुरहरम् ॥२१

हरिं ब्रह्माभिन्नं सुविदितवता तेन महता
न्यवेशि स्वं चित्तं चरणकमले तस्य सततम् ।
प्रियं तस्याधातुं सकलमकरोत् कर्म स कृती
तमेवैकं चक्रे शरणमखिलाभीष्टफलदम् ॥२२

स गायन् सङ्गीतं हरिविषयमापत प्रतिपदं
समाधिं दिव्यात्मा मनुजहृदयाश्चर्यजननम् ।
व्यमुञ्चद् वाष्पाम्भः क्वचिदपि च भावेन महता
क्वचिद् दृष्ट्वेष्टं परममुदमाधत्त हृदये ॥२३

क्वचिद् योगं कुर्वन् क्वचन वचनं चारु रचयन्
सदाचारव्रातं क्वचिदपि वहन् शास्त्रविहितम् ।

क्वचिद् गीतं गायन् स्वरचितपदं भावविकलः
स एको नानात्मा समजनि नृणां विस्मयपदम् ॥२४

उदात्तं सङ्गीतं मधुरमधुरं तस्य महतो
जनाः श्रुत्वा तृप्ता हरिचरणभक्तिं प्रतिगताः ।
असारे संसारे सुविशदहृदः क्षीणरतयो
रतिं पूतां पूतात्मनि भगवति प्रापुरभितः ॥२५

तद्गीतः परमार्थगीतनिवहो ग्रन्थाकृतिः प्राचरद्
यत्र श्रीहरिपादपद्मशरणोकारः प्रतिष्ठां गतः ।
भावावेशवशानमितेन वचसा श्रान्तास्य नो लेखनी
तस्माद् दीर्घतमान्युदारमनसो गीतानि तस्याभवन् ॥२६

तत्काले किल दिव्यभूतिरनघः श्रीरामकृष्णो वशी
लोकाह्लादनदक्षिणेश्वरपदे सिद्धः समाधौ महान् ।
सोऽयं तत्प्रथमावलोकनदिने सुप्रत्यभिज्ञातवत्
तं प्रत्याय्य जनेषु विस्मयमधात्तत्त्वं बहु व्याहरन् ॥२७

धर्मस्य स्थितिसाधनाय सुतरां ये ये प्रयत्नं व्यधुः
तत्काले कलिकालदर्पविषमे सर्वेश्वरप्रेरिताः ।
ते सर्वे तमवेत्य सत्यशरणं दिव्योदयं बान्धवं
श्रद्धासम्बलिताः प्रसन्नमनसस्तन्माननां चक्रिरे ॥२८

सन्न्यासाश्रमधर्मपालनरताः केचित् सुसिद्धा जना
दैवात् तं प्रसमीक्ष्य तस्य सुतरां माहात्म्यमाघोषयन् ।
श्रुत्वा सन्निहिता नरा गृहगतस्याप्यस्य लोकोत्तरं
माहात्म्यं बहुविस्मयेन दधिरे श्रद्धां गभीरां ततः ॥२९

भक्तिः श्रीहरिपादपद्मयुगले तस्याभवद् यादृशी
तादृश्येव चिरोज्ज्वला स्वजननीश्रीपादपद्मद्वये ।
साक्षाद् दैवतमित्यवेत्य जननीमानर्च्च स प्रत्यहं
तस्या मानसमन्ववर्त्तत सदा श्रीमान् नगेन्द्रः शमो ॥३०॥

मातुः पादपयोजसङ्गि सलिलं मेने स गङ्गाजलं
तत्पादाब्जरजःकणं निरचिनोत तीर्थावलीमृत्तिकाम् ।
तस्या हास्यलवं प्रसादमनघं मेने परब्रह्मणः
तस्या वाङ्मयमेष वेदवचनं मत्वा सदापालयत् ॥३१

प्रातर्मातृपदाम्बुजे कृतनतिर्मेने दिनं मङ्गलं
यात्रायाञ्च तदर्चनां स नियतं जज्ञौ महाश्रेयसे ।
तस्याः प्रीतिलवं सदा निरणयत सर्वार्थसारं भवे
तां स्वर्गादपि भूरिगौरवमयीं भक्त्या चिरादन्वभूत ॥३२

मातुः सन्निहितो यदा स ववृते तावत सुखेनावसत
तां हित्वा परमं विषादमगमत्तैस्तैर्हितैर्वर्जितः ।
मातापि प्रियकृत्यराशिमनिशं तं सन्त्यजन्ती सुतं
न क्वापि स्थितिमन्वमोदत निजां शीलेन सर्वोत्तमा ॥३३

आसीन्मातरि तादृगेव परमो भक्तस्तदीयाग्रजो
गोपालेति सुविश्रुतः सुचरितः श्रीमान नगेन्द्रप्रियः ।
स श्रीरामपुरेऽवसत परिजनैः स्वीयैः प्रकृष्टे पदे
मातू रोगनिवर्तनाय स हि तां तत्पत्तनं प्रापयत ॥३४

स प्राप्तं जननीवियोगजनितं दुःखं न सोढुं क्षमः
तत्रैव प्रजगाम मातृसविधे कल्याणकामो भृशम् ।
तत्राप्यस्य गुणैर्वशीकृतहृदः संख्यातिगा मानवाः
श्रोतुं धर्ममयोपदेशनिवहं सोत्साहमभ्यागताः ॥३५

तस्मिन् धर्मसभा विधाय बहुला धर्मोपदेशैरसौ
प्राचीं भारतसंस्कृतिं शुभमयीं व्याकृत्य नित्यं व्रती ।
कीर्तिं प्राप परां सुधांशुधवलां लोकेषु लोकोत्तरो
भक्तास्तस्य परःशताः समभवन तद्गौरवप्रेरिताः ॥३६

तेषु क्वापि वणिग्गणस्य करणे यातः प्रधानं पदं
भक्तः कोऽपि विहारिलालपदभाक् तत्रातिभक्तिं दधत ।

तस्याज्ञामुपगत्य दीनकृपया तत्र प्रयुक्तां तदा
संख्यातीतनृणामुपायमकरोत संसारयात्रास्थितेः ॥३७
स श्रीरामपुरे परोपकरणाननित्यव्रतासेवनात्
चारित्र्यादुपदेशपाटववशाद् योगाद् विभूत्यागमात् ।
सन्तोषादभिमानलेशविरहान्नानागुणादन्यतः
नारीणाञ्च नृणां समं समभवच्छ्रद्धापदं सोऽद्भुतः ॥३८
नानाकृत्यरतोऽप्यसौ नियमतः सेवां जनन्या व्यधात
सर्वे च स्वजनाः ससम्भ्रमतया तत्सेवने व्यापृताः ।
वैद्या दक्षतमाश्च भेषजचयं रोगोपयुक्तं ददुः
रोगार्त्ताप्यनुकूलतां वृतवती रोगे चिकित्साविधेः ॥३९
रोगोत्सादनिदानमेवमखिलं यद्यप्यभूत सङ्गतं
रोगार्त्ता त्रिपुरा तथापि न गता रोगाद् विमुक्तिं तदा ।
रोगः संववृधे क्रमात परिजनाः सर्वे सशङ्काः स्थिताः
सर्वं निष्फलमेव रोगिषु भवत्यायुःक्षये साधनम् ॥४०
मातुर्वियोगमचिरेण भवन्तमेव सञ्चिन्त्य तत्त्वविबुधोऽपि नगेन्द्रनाथः
चापल्यमाप मनसो मनुजस्वभावात धैर्येण तत्तु निरुरोध स कार्यदर्शी ॥४१
अचिरभाविनि मातुरथ क्षये निपुणवैद्यगणैरुपवर्णिते ।
चरमकालविधेयविधिस्रजाम् उपनये मतिमेष दधौ क्षमी ॥४२
चान्द्रायणादिव्रतमाप्तदेशितं स प्रातिनिध्येन चकार पावनम् ।
गीता सुगीता परतत्त्वकोविदैः प्रवर्तितं श्रीहरिनामकीर्तनम् ॥४३
विज्ञाय दूरादपि बान्धवा जनाः तदन्तकालं मिलितास्तदन्तिके ।
नगेन्द्रनाथः प्रतिषिद्धवानसौ शोकाश्रुवर्षं स्वजनेषु सर्वथा ॥४४
अथ विजयदशम्यां पार्वतीव प्रसन्ना हरिपदजनिगङ्गातीरमेषा च नीता ।
तदनुगमनकाले श्रीहरेर्नामगानैर्मुखरमजनि सर्वं पत्तनञ्चान्तरिक्षम् ॥४५॥

( क्रमशः )

---

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

## श्रीचैतन्यचरितामृते मध्यलीलायां

### प्रथमः परिच्छेदः

( पूर्वानुवृत्तः )

भाग्यवान कुक्कुरः कोऽपि शिवानन्देन चागतः ।
प्रभोश्चरणमालोक्य सपद्यन्तर्दधौ हि सः ॥१३०॥
मार्गे बभूव सर्वेषां सार्वभौमेण मेलनम् ।
सार्वभौमभट्टाचार्यः काशीक्षेत्रं जगाम च ॥
वैष्णवाः सर्व आगत्य प्रभुणा सह सङ्गताः ।
प्रभुः सर्वान् समादाय जलकेलिं चकार च ॥
कृतवान सह तैः सर्वैर्गुण्डिचागृहमार्जनम् ।
रथयात्रामसौ पश्यन्ननर्त्त श्रीमहाप्रभुः ॥
उद्याने कृतवांस्तत्र विलासान विविधानथ ।
कृष्णदासाह्वविप्रेण कृतं तस्याभिषेचनम् ॥
नृत्यान्ते गुण्डिचागेहे जलकेलिं चकार सः ।
लक्ष्म्याः केलिमसौ होरापञ्चम्यां सन्ददर्श च ॥
जग्राह गोपवेशञ्च कृष्णजन्मोतसवे प्रभुः ।
लगुड़ं घूर्णयामास दधिभारमुवाह च ॥
गौड़ीयानां स भक्तानां यात्रानुज्ञां ददौ ततः ।
चक्रे सहचरैर्भक्तैः सदा सङ्कीर्त्तनं प्रभुः ॥
ततो वृन्दावनं गन्तुं गौड़यात्रां चकार सः ।
पथि प्रतापरुद्रोऽसौ सिषेवे बहुधा प्रभुम् ॥

वस्त्रदानप्रसङ्गश्च पुरीगोस्वामिना सह ।
श्रीरामानन्दरायस्यानुयानं भद्रकावधि ॥
विद्यावाचस्पतेर्गेहे तस्थावागत्य च प्रभुः ।
तं द्रष्टुं जनसंघट्टो महांस्तत्र बभूव च ॥१४०॥
अविश्रान्ता जनाः पञ्च दिवसान ददृशुः प्रभुम् ।
आगच्छत कुलियाग्रामं रात्रौ स लोकशङ्कया ॥
आकर्ण्य कुलियाग्रामे प्रभोरागमनं जनाः ।
कोटिशस्ते समाजग्मुर्वीक्षितुं श्रीमहाप्रभुम् ॥
कृतवान कुलियाग्रामे देवानन्दे कृपामसौ ।
श्रीवासेन च गोपालं विप्रं दोषममार्जयत् ॥
पाषण्डा निन्दकाश्चेत्य पतिताः पादयोः प्रभोः ।
कृष्णप्रेम ददौ तेभ्योऽपराधं मार्जयन् प्रभुः ॥
नृसिंहानन्द आकर्ण्य यान्तं वृन्दावनं प्रभुम् ।
तत्पथं सज्जयामास मनसा हृष्टमानसः ।
रत्नैर्बबन्ध पन्थानं कुलियानगरात्ततः ।
तस्मिंश्चास्तृतवान शय्यां निर्वृन्तैः कुसुमैः कृताम् ॥
सपुष्पकेसरश्रेणिं पन्थानमभितो न्यधात् ।
चक्रे पुष्करिणीर्दिव्याः पार्श्वयोश्चान्तरान्तरा ॥
तेन रत्नमयं तीर्थं फुल्लाब्जान्यत्र चक्रिरे ।
सुधास्वादं जलं नानाखगाश्च कलकूजनाः ॥
कल्पितः शीतलो वायुर्नानासौरभमावहन् ।
कानाएनाटशालान्तं कृतञ्च पथिबन्धनम् ॥
तन्मनो नाग्रतोऽगच्छन्मार्गं बन्धुं न चाशकत ।
मार्गं बन्धुमशक्तोऽसौ नृसिंहो विस्मितोऽभवत् ॥१५०

(क्रमशः)

---

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Rama nath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkaharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). (Out of stock)

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakra varti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members),

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam** (a new Mahakavya) of MM. Kalipada, Tarkacharya, Rs, 5 ;Rs, 4-8 (for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re 1—8:—Re 1—4: (for members).

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदः चतुःषष्ट्यधिकत्रयोदशशततम-( १३६४ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा ( V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वेयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्
१६८।१, राजा-दीनेन्द्रष्ट्रीट्,
संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

---

## अधस्तनग्रन्थाः

### सद्य एव प्रकाशिता भवितारः

१। हलायुध-प्रणीतं ब्राह्मण-सर्वस्वम्। अध्यापक—श्रीदुर्गामोहन-भट्टाचार्य एम. ए. सांख्यतीर्थ-सम्पादितम्।

२। माणवक-गौरवम्—म. म. श्रीकालीपदतर्काचार्यप्रणीतमपूर्वमभिनयोपयोगिनाटकम्।

३। कपालकुण्डलारूपकम्—अध्यापक—श्रीविष्णुपद भट्टाचार्य एम. ए. काव्यतीर्थसङ्कलितमभिनयोपगिरूपकरत्नम्।

४। चित्रचम्पूः—वाणेश्वरविद्यालङ्कारकृता—अध्यापक—श्रीजानकीनाथ-शास्त्रिसम्पादिता।

Reg. No. C 1073

Vol. XXXX. February 1958

No. 10 १८७९शकीये

४०श-वर्षस्य माघे

१०म-संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1-4d

# Sanskrit Sahitya Parishat Series

(Revised up to December, 1957)

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina-charan Bhattacharya. Rs. 2-8. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members)

(Cont. to Cover 3rd Page

---

Printed by Bishnupada Bhattacharya M.A, Kavyatirtha. at Calcutta Oriental Press Private Ltd., 9, Panchanan Ghose Lane, Calcutta and published by the same from Sanskrit Sahitya Parishad, 168/1 Raja Dinendra Street, Shyambazar, Calcutta-4,

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXX. No. 10 | १८७९-शकीये माघे ४०श-वर्षस्य १०म-संख्या | February 1958.

## मतिमञ्जरी

### श्रीश्रीसरस्वती ।

[ निबन्धकः—श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः ]

नीहारहारघनसारसुधाकराणां कल्याणदां कनकचम्पकदामभूषाम् ।
उत्तुङ्गपीनकुचकुम्भमनोहराङ्गीं वाणीं नमामि मनसा वचसा विभूत्यै ॥
( सरस्वतीरहस्योपनिषत )

भारतीले सरस्वति या वः सर्वा उपब्रुवे, ता नश्चोदयत श्रिये ।
( ऋग्वेद म १ अः २४. सू: १८९ मन्त्र ८ )

हे भारति ! भरतः आदित्यः । तस्य सम्बन्धिनी भारती । तादृशि द्युलोकदेवते हे इले भूदेवि हे सरस्वति सरः वागुदकं वा । तद्वत्यन्तरिक्ष-देवते तादृशि देवि ! एताः क्षित्यादिदेवताः । एतास्तिस्र आदित्यप्रभाव-विशेषरूपा इत्याहुः । यास्तिस्रः सर्वा वो युस्मान् उपब्रुवे उपेत्य स्तौमि ताः यूयं नः अस्मान श्रिये सम्पदे चोदयत प्रेरयत । ( सायणाचार्य्यभाष्यम् । ) सेयं सरस्वती वागधिष्ठातृदेवतात्वेन विद्यालाभकामैरस्माभिः संपूज्यते

न धनकामिभिः कामनान्तरप्रेप्सुभिर्वेति लोकमर्य्यादा। प्रसिद्धं हि वाग्देवतात्वेन नदीपरत्वेन च वर्णनं वेदेषु। देवतारूपायाश्च पूजनं सम्पत्कामिभिः पितृतृप्तिसमुत्पादनकामिभिरपि। तथाचाथर्ववेदभाष्ये श्रीमत्सायणाचार्य्याः—

"पितृमेधकर्मणि" सरस्वतीं देवयन्तः "( ४१ ) इतितिसृभिरग्निदाता कनिष्ठपुत्त्रश्चितौ दक्षिणत आज्येन सारस्वतहोमान् कुर्य्यात्" इत्याद्युपक्रम्य

तत्र प्रथमा,—

"सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने।
सरस्वतीं सुकृतो हवन्ते सरस्वती दाशुषे वार्य्यं दात्॥"

( अथर्ववेद. काण्ड १८, सू १, मन्त्र ४१ )

"सरस्वतीं सरणवतीं सकलशब्दसरणिस्वरूपां वाग्देवताम्" इत्यादिना भाष्ये सरस्वत्या वाग्रूपत्वं देवतारूपत्वञ्च प्रतिपादितम्।

सरस्वतीं पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः।
आसद्यास्मिन् बर्हिषि मादयध्वमनमीवा इष आ धेह्यस्मे॥

( तत्रैव ४२ मन्त्रः )

सरस्वतीं देवीं पितरोऽपि हवन्ते आह्वयन्ति। कीदृशाः। दक्षिणा। दक्षिणाद् आच् इति आच् प्रत्ययः। वेदेर्दक्षिणभागे यज्ञम् अभिनक्षमाणाः व्याप्नुवानाः। नक्षतिर्व्याप्तिकर्मा। सर्वकर्मणि तां दिशम् इत्यादि सूत्रात् ( आश्व. २, ६. ३ )। वेदेर्दक्षिणभागे पैतृकं कृतस्नं कर्म क्रियते। पितॄणामपि स्वधालाभाय सरस्वत्यपेक्षा विद्यत एव। तत्रापि मन्त्रादिरूपायाः सरस्वत्या अपेक्षितत्वम्। हे पितरः! यूयम् अस्मिन् क्रियमाणे बर्हिषि यज्ञे आसद्य उपविश्य मादयध्वं सरस्वतीं तर्पयत। आसद्य यूयं वा मादयध्वं तृप्ता भवत। अस्माभिर्दत्तया स्वधयेति शेषः। किञ्च हे सरस्वति! पितृभिराहूता त्वम् अनमीवाः हिंसकैरक्षोभिर्वर्जिताः व्याधिरहिता वा इषः इष्यमाणाः एवं लक्षणानि अन्नानि अस्मे

अस्मासु आधेहि स्थापय। इति सायणभाष्ये सरस्वत्याः पितृदेवतात्वेन स्वधोपभोक्तृत्वं स्पष्टं प्रतिपादितम्।

स्पष्टञ्च तृतीयायामृचि—

सरस्वति या सरथं ययाथोक्थैः स्वधाभिर्देवि पितृभिर्मदन्ती।
सहस्रार्घमिड़ो अत्र भागं रायष्पोषं यजमानाय धेहि॥

( तत्रैवाथर्वणमन्त्रे ४३ संख्यकाः )

हे सरस्वति देवि या प्रसिद्धा त्वं सरथं समानम् एकमेव रथं ययाथ यासि। सामर्थ्यात् पितृभिरिति गम्यते। ...उक्थैः शस्त्रैः स्वधाभिः। पितॄणाम् अन्नं स्वधा। ताभिश्च पितृभिः सह मदन्तो आत्मानं तर्पयन्ती। त्वम् ( अत्र ) सहस्रार्घम् अनेकैः पुत्त्रादिभिः पूजनीयं पुत्रादिसंतर्पकं बहुमूल्यत्वेन अनर्घं वा इड़ः अन्नस्य भागं भजनीयम् अंशं रायष्पोषम् धनस्य गवादिलक्षणस्य पुष्टिं च यजमानाय मह्यं धेहि प्रयच्छ। रायष्पोषमिति षष्ठयाः पतिपुत्त्र इत्यादिकं सांहितिकं षत्वम्।

इति भाष्ये सरस्वत्याः स्वधोपतर्पणेन गवादिलक्षणधनदातृत्वमपि संसाधितम्। सुतरां लक्ष्मी-सरस्वत्योः सपत्नीत्वेन विवादकल्पनं कल्पनमेव।

धनदातृत्वञ्च ऋग्वेदेऽपि :—

यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्य्याणि।
यो रत्नधा वसुविद् यः सुदत्रः सरस्वति तमिह धातवे कः॥

( ऋग्वेदः मः १ अः २२ सुः १६४ मन्त्र ४९ )

हे सरस्वति! ते तव सम्बन्धी यः स्तनः स्तनवच्छिशुस्थानीयानां प्राणिनामाप्यायनकारी लौकिकवैदिकसुशब्दरूपस्तनः शशयः शयानः तव देहे वर्तमानः। यश्च स्तनः मयोभूः रसस्वादिनां सुखस्य भावयिता। येन स्तनेन विश्वा सर्वाणि वार्य्याणि वरणीयान्यभिमतरूपाणि धनानि पुष्यसि भोक्तृभ्यः। यश्च स्तनः रत्नधा बहुविधरमणीयरसानां धारयिता वसुवित् वसूनां वासयितॄणां धनानां वेत्ता लब्धा वेदयिता वा। किञ्च यः स्तनः सुदत्रः शोभनदानः "सुदत्रः कल्याणदानः" ( निरुः ६. १४ ) इति

निरुक्तम्। अत्रासकृत यच्छब्दश्रवणं स्तनस्यातिप्रशस्तत्वज्ञापनार्थम्। हे देवि तं तादृशं सर्वप्राण्युपकारकं सूक्तमयं स्तनम् इह अस्मिन् कर्मणि इदानीं वा धातवे अस्माभिर्धातुं पातुं पानाय कः कुरु।

इति ऋग्भाष्ये तस्या मातृरूपत्वेन धनदातृत्वं विशदं समुपवर्णितम्। सुशब्दरूपस्तनकल्पनयाऽतिरमणीयभावः प्रदर्शितः। यः खलु यथार्थतः सारस्वतानां समुपयोगी समभिप्रेतश्च।

सरस्वतीरहस्योपनिषदि—

या साङ्गोपाङ्गवेदेषु चतुर्ष्वेकैव गीयते।
अद्वैता ब्रह्मणः शक्तिः सा मां पातु सरस्वती॥

इत्यनेनाद्वैतब्रह्मशक्तिस्वरूपत्वमपि प्रत्यपादि। ब्रह्मणः शक्तिरिति राहोः शिरोवदभेदे षष्ठी। अन्यथाद्वैतत्वोक्तिव्याघातादिति। सेयं सरस्वती जगत्कल्याणाय प्रवर्तमाना सर्वेषां मङ्गलं विधत्तामिति सरस्वतीरहस्योपनिषद्वाक्येन स्तूयते,—

या श्रद्धा धारणा मेधा वाग्देवी बिधिवल्लभा।
भक्तजिह्वाग्रसदना शमादिगुणदायिनी॥
नमामि यामिनीनाथलेखालङ्कृतकुण्डलाम्।
भवानीं भवसन्तापनिर्वापणसुधानदीम्॥

अपिच—

यां विदित्वाऽखिलं बन्धं निर्मथ्याखिलवर्त्मनः।
योगी याति परं स्थानं सा मां पातु सरस्वती॥
कम्बुकण्ठी सुताम्रोष्ठी सर्वाभरणभूषिता।
महाभरस्वती देवी जिह्वाग्रे सन्निविश्यताम्॥

---

# संस्कृतसाहित्यपरिषदः

## चत्वारिंशवर्षीय-कार्य्यविवरणम्

माननीयाः सभापतिमहाभागाः ! सदयं समुपागताः सारस्वतसहोदराः श्रद्धेयाः मातरः ! अद्य खलु संस्कृतसाहित्यपरिषदः शुभे एकचत्वारिंशवार्षिकमहोत्सववासरे भवतः समवाप्य परिषदियं भवद्भ्यः स्वागतं व्याहरन्ती अननुभूतपूर्व्वं प्रमोदविशेषं प्रयाति ; पुष्णाति च मनसि भाविनि वर्षे भवताम् एवमेवासकृत समागमवासनाम् ।

कार्य्यविवरणस्योपस्थापनात प्राक् परिषदः सह-सभापतिचराणां दार्शनिकप्रवराणां डक्टर् आदित्यनाथमुखोपाध्याय-एम् ए, पि-एइच्-डि महोदयानां परिषदोऽन्यतमप्रतिष्ठातॄणां पण्डितवर्य्याणां वामाचरणकाव्यतीर्थानां नैयायिककेशरिणाम् अमरेन्द्रमोहनतर्कतीर्थानां स्मार्त्तचूड़ामणीनामाशुतोषस्मृतितीर्थानां नटभास्कराणां यामिनीकान्तविद्यारत्नानां गवेषणैकरत्नानामध्यापकप्रवराणां दीनेशचन्द्रभट्टाचार्य्याणाञ्च परलोकप्रयाणेनाप्रतीकारां क्षतिं संस्मरन्तो शोकविह्वलेयं परिषत तेषां महात्मनां परिजनानां सविधे गभीरां समवेदनां ज्ञापयति ।

विगते वर्षे माघस्य षष्ठेऽहनि इउनिभार्सिटि-इनष्टिटिउड् भवने पण्डितप्रवराणां श्रीमतां हेरम्बनाथतर्कतीर्थमहोदयानां साभापत्येन परिषदः चत्वारिंशवार्षिकमहोत्सवः समजनि । सभान्ते परिषत्सदस्यैः समागतानां विपश्चिद्वर्य्याणां चित्तविनोदनाय सुष्ठु अभिनीतं महाकवेर्भासस्य प्रतिमानाटकम् ।

संस्कृतभाषायाः संस्कृतसाहित्यस्य च प्रसारसाधनाय कैश्चित संस्कृतानुरागिभिः दहनपक्षनेत्रचन्द्रमिते वङ्गाब्दे स्थापितेयं परिषत् संस्कृतभाषामय-मौलिक-ग्रन्थप्रबन्धादिनिर्म्माण-पाठसमालोचनाभिश्चतुष्पाठी

स्थापनेन, मुद्रितामुद्रितसंस्कृतग्रन्थसंग्रहसंरक्षणादिभिरप्रकाशितसंस्कृतग्रन्थानां प्रकाशनेन, संस्कृतभाषामयमासिकपत्रप्रचारेण, संस्कृतरूपकाभिनयेन शास्त्रव्याख्यानेन च स्वं सदुद्देश्यं साधयन्ती साम्प्रतं सर्वथा विबुधचित्तान्याकर्षन्ती वर्त्तत इति तु नः परमं प्रमोदस्थानम् ।

एतस्मिन वर्षे श्रीमन्तः निरञ्जनस्वरूपब्रह्मचारिनवतीर्थन्यायवेदान्ताचार्य्याः श्रीमन्तः रामरतनसांख्यशास्त्रिणः, श्रीमन्तो विनयकृष्णवन्दोपाध्यायाः श्रीमन्तो जानकीनाथशास्त्रिणः श्रीमन्तो रमेन्द्रकृष्णगोस्वामिनः श्रीमन्तो नरेन्द्रनाथपञ्चतीर्थसिद्धान्तशास्त्रिणः श्रीमन्तः सुरेन्द्रनाथचक्रवर्त्ति-वेदशास्त्रिणः श्रीमन्तो नारायणचन्द्रगोस्वामि एम् ए महोदयाः श्रीमन्तो वसन्तकुमारचट्टोपाध्याय एम् ए महोदयाश्च सुललितैः शास्त्रव्याख्यानादिभिः सदस्यानां चित्ततोषं सम्पादितवन्तः। परिषद्ग्रन्थागारस्य समुन्नतिविधानं साम्प्रतं परिषदः कर्त्तव्येषु प्राथम्येनैव वर्त्तते। बहूनि दुर्लभानि पुस्तकानि परिषद्ग्रन्थागारे सुलभान्येव लसन्ति। अष्टनवत्यधिकद्वयशीतिशतसंख्यकानि मुद्रितपुस्तकानि अष्टत्रिंशदधिकषट्सप्ततिसंख्यकानि च हस्तलिखितपुस्तकान्यधुना परिषद्ग्रन्थालये वर्त्तन्ते।

परिषदो हस्तलिखितग्रन्थानां विवरणात्मिका कापि सूची निर्म्मीयमाणा आस्ते। शासकगोष्ठीसकाशात् लभ्यते चेत् यथोपयुक्तं साहाय्यं तदा नातिचिरादेव नूनं पूर्णतां गमिष्यति।

वर्षेऽस्मिन् ये नाम महात्मानो यानि वा प्रतिष्ठानानि परिषद्ग्रन्थागारे पुस्तकादिकं प्रदाय ग्रन्थागारस्य समुन्नतिमसाधयन तेभ्यः साधुवादाः प्रदीयन्ते।

एतावता कालेन परिषदा षड्विंशतिः ग्रन्थाः प्रकाशिताः। अर्थाभावादेवाशानुरूपं न जातं सर्व्वम्। परिषदोऽन्यतमाऽध्यापकैः श्रीमद्भिः रामधनशास्त्रिभिरस्मिन्नेव वर्षे प्रकाशितं भरतसेनकृतं सुखलेखनम्।

हलायुधनिर्म्मितस्य ब्राह्मणसर्व्वस्वस्य मुद्रणम् इदानीं चलति। मन्ये नातिचिरादेव स ग्रन्थः प्रकाशितो भविष्यति।

महामहोपाध्यायश्रीकालीपदतर्काचार्य्याणां सम्पादनया तत्सहकारिणाञ्च श्रीरामधनशास्त्रिकाव्यव्याकरणपुराणतीर्थ-श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थानां प्रयत्नातिशयेन यथायथं प्रचलति पत्रिकाप्रकाशकार्य्यम्। संस्कृतभाषायां जनानामनुरागमुत्पादयितुमेवास्ते परिषदोऽभिनयविभागः। नानादेशेषु रूपकाण्यभिनीय परिषदा समर्ज्जितं विमलं यशः। देशस्यार्थिकावस्था सङ्कटापन्नेति कृत्वा कतिचिद् वत्सरान यावत परिषद आयो ह्रस्वतामवगाहते तेन च परिषदः कर्म्मोद्यमः सङ्कुचित एव वर्त्तते। आशास्महे आगामिनि वर्षे साहाय्यरूपेण शासकगोष्ठी परिषदे त्रिसहस्र-रूप्यकाणि दत्त्वा कार्य्यपरिचालनं सुकरं करिष्यतीति। वर्त्तमाने वर्षे यैर्महात्मभिः परिषदेऽर्थादिकं दत्तं तेभ्यः परिषदियम् आन्तरिकीं कृतज्ञतां ज्ञापयति।

परिषदः त्रितलनिर्म्माणकार्य्यं सम्पूर्णमेव।

परिशेषे च वृत्तप्रकाशादिना द्रव्यादिदानादिना वा यैः कैश्चित परिषदियमुपकृता तेभ्यः साधुवादान प्रदाय परिषदश्चत्वारिंशवार्षिककार्य्यविवरणं परिसमाप्यते।

इति विज्ञापयन्ति
श्रीचपलाकान्तभट्टाचार्य्य-
श्रीप्रकाशचन्द्रवन्द्योपाध्याय-
श्रीविष्णुपदभट्टाचार्य्याः
सम्पादकाः

---

कवीन्द्र-रवीन्द्रनाथस्य

# वसन्तः ।

अनुवादकः—अध्यापक-श्रीदुर्गादासगोस्वामी एम. ए., साहित्यशास्त्री

उन्मुच्य प्रथमं यदायुतशरत्पूर्वं हठान्नन्दन-
द्वारं दक्षिणवर्तिमर्त्यमविशः कौतूहलात् फाल्गुने ।
आद्ये मत्त ! वसन्त ! पीतवसनः पुंसां कुटीराङ्गणे
मन्दारस्य रजः प्रमत्तपवने लोलोत्तरीयात् किरन् ॥१
वीणावेणुकरास्तदा खलु नरा नार्यश्च तत्रापतन्
धावित्वा गणशः स्वयं स्वभवनद्वाराण्यपावृत्य भोः ।
किञ्चान्योन्यमहो ! मुहुः प्रहसितैराघ्नन् विकीर्य द्रुतं
सोन्मादाः सुमनोरजांसि रभसादुन्मत्तनृत्योत्सवे ॥२
सद्योजात इह त्वमादिममधोर्मासेऽतिदूरे नवे
विश्वे यत् कुसुमं प्रतप्तकिरणस्वर्णाभमद्यो सखे ! ।
आमज्य प्रमुदानयः प्रतिशरत् प्रत्नं नवं शाश्वतम्
निःशेषञ्च करण्डकं सुमनसां तेनैव सज्जं पुनः ॥३
तत् तस्मिँल्लिखिता प्रसूननिवहे वार्ता जनैर्विस्मृता
प्राचीना जगतो दिनस्य सुचिरं हन्त ! व्यतीतस्य सा ।
तस्मात् क्रान्तिविलुप्तिविस्मृतिमतो हा ! लोक-लोकावधे-
राक्लिष्टा खलु माधुरीह विलसत्यद्यापि तत्सौरभे ॥४
सद्यः प्रस्फुटितात् तथा च निविड़ात् कुञ्जात् सुरम्यादहो !
तेनैवाद्य समुच्छ्वसन्ति परितः काष्ठासु सर्वास्वपि ।
लक्षाहःक्षणदोत्थितानि नियतं चित्रार्तिरश्रुव्रजो-
गीतिर्हास्यमपीह यौवनभरोद्भूतान्यमूनि क्षितौ ॥५

या माला ग्रथिता मयाद्य निपुणं तुभ्यं प्रदातुं मुदा
तस्या एव दलेष्वहो ! सुमनसामज्ञातनाम्न्याः स्फुटम् ।
नेत्रयाः सास्ति पुरातनी कतिविधाकाङ्क्षाकथा विस्मृता
लोकैः सम्प्रति हन्त ! नेत्रविगलद्बाष्पाक्षरैरङ्किता ॥६

अस्मिन्नेव सयत्नसिक्ततरुणोद्योऽयद्दले पाटले
किञ्चारक्तपुटे स्फुटन्ति कति वासंख्याश्चलाः कुण्ठिताः ।
कान्तानां प्रणयस्य चुम्बनकथाः संमुद्रिताः सादरं
ताः सर्वाः खलु साम्प्रतं क्षितितले कात्स्न्र्येन जानन्ति के ॥७

तूष्णीं दृष्टिचतुष्टये वत ! मिथः सद्यः प्रवुद्धाः कथा
यावत्यः प्रणयाद् वसन्तरजनौ तस्यां किमप्यावयाः ।
वार्ता सा निखिला रहस्यपिहिता नीता क नु त्वद्भवैः
पुष्पैरद्य वसन्त ! हन्त ! विकचैर्जाने न तत्त्वतः ॥८

सा चम्पा चकिता कलिर्वकुलजा सा चञ्चला मल्लिका
सा शुभ्रोन्नमिता नवा च रजनीगन्धा ममावाचयन् ।
नव्यं यौवनकाव्यमत्र कतिभिर्मुग्धैर्वसन्तैः पुनः
कण्ठालम्बितयोरसोन्यशमयन् नौ वासना-वंशिकाम् ॥९

अध्यायाः परमास्त एव कतिचिद् मज्जीवनस्य ध्रुवं
व्यर्थस्याङ्ग ! वसन्तमास ! सुपरिव्यक्ता भविष्यन्त्यहो ! ।
प्रत्यब्दं तव पुष्पसौरभभरे शून्ये स्थलेऽप्यप्सु च
ब्रह्माण्डे विपुले तथा निरवधौ काले च भाविन्यमी ॥१०

अस्मात् किञ्च युगाद् युगान्तरममी यास्यन्ति नित्यं मिथः
प्रोताः केसरचम्पकप्रभृतिभिः फुल्लैः प्रसूनैरहो ! ।
आक्रीड़तपिककाकलीकलकलेष्वत्याकुलाः केवलं
द्राक् कुञ्जेष्वखिलेषु किञ्च मधुषु व्यक्तं भविष्यन्ति ते ॥११

२

अस्मिन् हन्त ! वसन्त ! कान्त ! तव भोः ! पत्रस्खलन्मर्मरे
निःश्वासे निहितामरा मम चिरं स्थास्यत्यहो ! वेदना ।
किञ्चोत्तप्तविगाढ़यौवनमदोत्पन्नः स मोहोऽपि मे
गूढ़ं स्थास्यति चैत्रसान्ध्यगगने रक्तातपे रञ्जितः ॥१२

---

## कपालकुण्डला-रूपकम्

( पूर्वानुवृत्तम् )

नवकुमारः—कथं गृहिणीति मन्यते ?

मतिः—वङ्गीयाः प्रायेण गृहिणीमेव सुन्दरतमां मन्यन्ते ।

नवकुमारः—अहं वङ्गीयः । भवती अपि वङ्गदेशीयेव भाषते । न यदि वङ्गदेशीया, कं देशमलङ्करोति भवती ?

मतिः—नेयं भाग्यहीना वङ्गीया । अपि तु पश्चिमदेशीया यवनी ।

नवकुमारः—( स्वगतम् ) कथमेषा वङ्गीया इव वाचमुच्चारयति !

मतिः—भवता वाग्वैदग्ध्येन गृहीतो मम परिचयः । सम्प्रति स्वपरिचय-प्रदानेनानुगृह्यतामयं जनः ।

नवकुमारः—सप्तग्रामे मे निवासः ।

मतिः—( श्रुत्वा विस्मयाविष्टा दीपमुज्ज्वलतरं कुर्वती ) दासीयं नाम्ना मतिः ! श्रोतुमिच्छामि का भवतोऽभिधेति ।

नवकुमारः—श्रीनवकुमारशर्मा । ( कम्पान्वितकलेवराया मतेः हस्तकम्पनेन दीपो निर्वाणतां गतः ) हन्त निर्वाणं गतो दीपः । दीनदास, दीनदास !

दीनदासः—( प्रविश्य ) किमाज्ञापयति भवान् ?

नवकुमारः—शीघ्रं दीपं प्रदीपय।

दीनदासः—यथाज्ञापयति भवान्। ( निष्क्रम्य पुनः प्रविश्य दीपं प्रज्वल्य निष्क्रान्तः। )

( ततः प्रविशति कश्चन यवनो रक्षी )

रक्षी—( यथारीति मतिमभिवाद्य ) जयति जयति देवी।

मतिः—किमेतत्? कथं युष्माभिर्विलम्बितम्? कुत्र वा अन्ये?

रक्षी—देवि वादकाः सर्वे मदोन्मत्ताः सञ्जाताः। तान् सर्वान् एकीकृत्य आनेतुमेव व्यापृता वयं शिविकायाः पश्चादवस्थिताः। ततो भग्नां शिविकां दृष्ट्वा भवतीञ्चानवलोक्य विमूढा वयं संवृत्ताः। केचित् तत्रैव विद्यन्ते। केचिच्च भवत्या अनुसन्धानाय अन्यत्र गताः। अन्वेषणक्रमेण च भवत्याः समागतोऽत्र दासः।

मतिः—गच्छ। समानयात्र तान् सर्वान्।

रक्षी—यथाज्ञापयति भवती। ( अभिवाद्य निष्क्रान्तः। मतिश्च करलग्न-कपोला तुष्णीं तिष्ठति। )

नवकुमारः—साम्प्रतम् अनुजानीहि मां गमनाय।

मतिः—भवान् कुत्र अवस्थास्यते?

नवकुमारः—अस्यैव पार्श्ववर्तिनि गेहे।

मतिः—( पुरतोऽवलोक्य ) गृहस्य पुरतः कापि शिविका दृश्यते। अपि नाम विद्यते भवतः कापि सहचरी?

नवकुमारः—सहधर्मिणी एव मे सहचरी।

मतिः—किमियमेव सा रमणीकुलललामभूता?

नवकुमारः—दर्शनेनैव ज्ञास्यते।

मतिः—दर्शनं किं लभ्येत?

नवकुमारः—का हानिः?

मतिः—तद् वितरतु मय्यनुग्रहम्। तस्य रमणीरत्नस्य दर्शनाय जायते मे कौतूहलम्। परं इदानीमेव गन्तुं न शक्यते। नातिचिरादेव भवतः समीपे मम गमनवार्तां प्रेषयिष्यामि।

नवकुमारः—यद् भवत्यै रोचते।

पान्थशालास्वामी—(प्रविश्य) आर्य्य! अत्रभवत्याः कृते निर्दिष्टः सुसज्जितः कक्षः।

नवकुमारः—( मतिं प्रति ) गच्छतु भवती पुनर्दर्शनाय।

मतिः—वाढ़म्। ( पान्थशालास्वामिना निर्गतायां मत्यां निष्क्रान्तो नवकुमारः। )

( क्रमशः )

---

# योगिभक्तचरितम्

## तृतीयः सर्गः

( पूर्वानुवृत्तम् )

नीता गङ्गातीरमेपा प्रसन्ना गङ्गामग्रे स्यन्दमानामपश्यत्।
एषा गङ्गा तत्तटे च म्रियेऽहम् तस्याश्चित्ते ज्ञानमीदृक् तदासीत् ॥४६
श्रोत्रेणैषा शृण्वती नाम विष्णोः संपश्यन्ती चक्षुषा गाङ्गरूपम्।
गङ्गामृतस्नामङ्गजातैः स्पृशन्ती तस्मिन् काले सा गतातिप्रसादम् ॥४७
हरिमिव सशरीरं श्रीहरिं कीर्त्तयन्तं नियमशतकपूतं भक्तवीरं सुधीरं।
परिजनगणजुष्टं श्रीनगेन्द्रं सुतं स्वं निजनयनसमीपे सा शनैराजुहाव ॥४८
वत्स! श्रीहरिनाम वाचय परं तिष्ठात्र मे सम्मुखे
त्वां दृष्ट्वा सकलेवरं हरिमिव प्राप्स्यामि सौख्यां गतिम्।
इत्युच्चार्य सुखेन नेत्रयुगलेनालोकयन्ती सुतं
स्वं सम्भ्रान्तनगेन्द्रनाथमजहात् प्राणानसौ सुव्रता ॥४९

तस्मादुत्तरमाकुलेन मनसान्त्येष्टिक्रियां यावतीं
सम्पाद्य स्वजना यथाविधि गृहं प्रत्यागता दुःखिताः ।
काले श्राद्धविधिः समाप्तिमगमत्तस्याः सुताद्यैः कृत-
स्तावत् संसृतिबन्धनं शिथिलतामत्यर्थमस्यावहत् ॥५०

सैवासीद् बन्धनं तस्य नैष्ठिकब्रह्मचारिणः ।
श्रीनगेन्द्रस्य संसारे गतासौ त्रिदशालयम् ॥५१

तदा सर्वा दिशः शून्याः श्रीनगेन्द्रस्य संबभुः ।
प्रत्यक्षदेवताबुद्ध्या काम‍थासौ प्रपूजयेत ॥५२

तदा मातृवियुक्तस्य न श्रीरामपुरे स्थितिः ।
सुखाय समवर्त्तिष्ट जननीं स्मरतः सदा ॥५३

अत्र स्थिता कृतवती निजनित्यपूजा—
मत्र स्थिता च निजमन्त्रजपश्चकार ।
भुक्तं तयात्र शयनं कृतमत्र जोष—
मित्थं स्मृतिर्मनसि दुःखकरी बभूव ॥५४

वस्तूनि तत्र भवने विततान्यमुष्य
सर्वाणि मातृविषयां स्मृतिमर्पयन्ति ।
येनास्य विघ्निनमभूत किल कर्मजातं
भव्यार्थमाचरितपूर्वमपूर्वधाम्ना ॥५५

स श्रीरामपुरं विहाय कृतधीरन्यत्र वासं तदा
मेने भव्यतरं त्वरामपि गतश्चक्रे तदायोजनम् ।
तद्विच्छेदशुचा गता विकलतां तत्रत्यभक्तोत्तमाः
निर्बन्धैरपि चित्तमस्य विमुखीकर्त्तुं न शक्तिं दधुः ॥५६

अथ भक्तान् समाश्वास्य शान्तैर्वचनविस्तरैः ।
राणीगञ्जपुरं प्रागात्तत्रत्यहितकाम्यया ॥५७

इति तृतीयसर्गः समाप्तः ।　　　　( क्रमशः )

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

## श्रीचैतन्यचरितामृते मध्यलीलायां

### प्रथमः परिच्छेदः

( पूर्वानुवृत्तः )

यूयं श्रृणुत हे भक्ता इत्यूचे कृतनिश्चयः ।
प्रभुर्वृन्दावनं नूनमिदानीं नैव यास्यति ॥
कानाएर्नाटशालातो ध्रुवं प्रत्यागमिष्यति ।
ज्ञास्यथातः परं यूयमिति वच्मि सुनिश्चितम् ॥
कुलियातः प्रतस्थेऽतः प्रभुर्वृन्दावनं प्रति ।
सर्वे भक्ताः समं तेन सहस्रञ्च जना ययुः ॥
यत्रागच्छन प्रभुस्तत्र मनुजाः कोटिसंख्यकाः ।
द्रष्टुमागत्य दृष्ट्वा च दुःखशोकान जहुः किल ॥
यत्र यत्र प्रभोः पादौ गच्छतः पतितौ भुवि ।
तन्मृदं जगृहुर्लोकाः पथि गर्त्तास्ततोऽभवन ॥
एवं गच्छन प्रभूरामकेलिग्राममथागमत् ।
गौड़पुर्य्याः समीपेऽसौ ग्रामो निरुपमः क्षितौ ॥
तत्र नृत्यं चकारासौ प्रभुः प्रेम्णा विचेतनः ।
आजग्मुः कोटिशो लोका द्रष्टुकामाः प्रभोः पदम् ॥
गौड़ेशो यवनो राजा प्रभावमश्रृणोत प्रभोः ।
ततो गदितुमारेभे किञ्चिदेवं सुविस्मितः ॥

इयन्तोऽनुगता लोकाः किमप्यददतश्च यम् ।
स एव खलु गोस्वामी मन्यतामिति निश्चितम् ॥
न कश्चिद् यवनः काजी कुर्य्यादस्य विहिंसनम् ।
यत्रैवास्य मनो याति तत्रायं विचरत्विति ॥१६०
राज्ञाथ केशवक्षत्रः पृष्टो वार्त्तां महाप्रभोः ।
सोऽपाज्ञानीत माहात्म्यं प्रभोर्गौड़पतेः पुरः ॥
"अयं भिक्षुकसन्नयासी तीर्थपर्यटने रतः ।
जनास्त्रिचतुरा एव तमन्वायान्ति वीक्षितुम् ॥
यवना भवतः कर्णं जपन्ति तद्विरुद्धताम् ।
न लाभस्तस्य हिंसायां भवति प्रत्युत क्षतिः ॥"
इति प्रबोध्य राजानं केशवेन प्रभोः पुरः ।
प्रेरितो ब्राह्मणः कोऽपि तं प्रस्थापयितुं ततः ॥
राज्ञा तल्लेखकश्रेष्ठो विजने पृष्ट एकदा ।
व्याख्यातुं स समारेभे महिमानं महाप्रभोः ॥
'यो राज्यं दत्तवांस्तुभ्यं यो वा भवति ते प्रभुः ।
जातोऽसौ तव भाग्येन तव देशं समागतः ॥
तव वाञ्छति कल्याणं सिद्धवागेव पूरुषः ।
अस्याशीर्वचनेनैव सर्वतो विजयस्तव ॥
कथं पृच्छसि मामेवं पृच्छ त्वं निजमानसम् ।
विष्णोरंशसमानोऽसि नराणामधिपोऽसि यत् ॥
मन्यसे कृष्णचैतन्यं कीदृशं निजचेतसा ।
यथा गृह्णाति ते चेतः प्रमाणं तावदेव तत् ॥
इत्याकर्ण्यावदद्राजा श्रूयतां मे मनोमतम् ।
अयमेवेश्वरः साक्षान्नास्ति कोऽप्यत्र संशयः ॥१७०
इत्युक्त्वान्तःपुरं राजा प्रविवेश निजं यदा ।
तदासौ लेखकश्रेष्ठो निजालयमुपागतः ॥

ततः स्वगृहमागत्य भ्रातरौ द्वौ विचिन्त्य तौ ।
सङ्गोप्य च निजं वेशं प्रभुं द्रष्टुमगच्छताम् ॥
सोदरौ द्वौ निशीथे तौ प्रभोः स्थानमुपस्थितौ ।
प्राङ् नित्यानन्दमाश्रित्य हरिदासेन सङ्गतौ ॥
तयोरागमनं ताभ्यां प्रभवेऽथ निवेदितम् ।
त्वां द्रष्टुमागतौ रूपसाकरमल्लिकाविति ॥
तृणगुच्छद्वयं दन्तैर्गृह्णन्तौ भ्रातरावुभौ ।
संवेष्ट्य वाससा कण्ठं दण्डवत् पतितौ भुवि ॥
दैन्येनारुदितामुच्चैस्तावानन्देन विह्वलौ ।
"युवामुत्तिष्ठतं स्वस्ति भूयादित्यवदत् प्रभुः ॥
तृणानि दशनैर्धृत्वा तावुत्थाय च सोदरौ ।
प्रभुं तुष्टुवतुर्दैन्याक्रान्तचित्तौ कृताञ्जली ॥
जय श्रीकृष्णचैतन्य जय कारुण्यसागर ।
जयोदारमहासत्त्व पतिताधमपावन ॥
नीचजातौ समं नीचैर्नीचकर्माणि कुर्वहे ।
आवां लज्जावहे वक्तुं भवतः पुरतः प्रभो ॥

"तथाहि भक्तिरसामृतसिन्धौ पूर्वविभागे
साधनभक्तिलहर्याम्—

मत्तुल्यो नास्ति पापात्मा नापराधी च कश्चन ।
परिहारेऽपि लज्जा मे किं ब्रुवे पुरुषोत्तम ॥१०"
पतितोद्धारणाय त्वमवतीर्णोऽसि हे प्रभो ।
नान्यः कश्चिद्विनावाभ्यां पतितो वर्त्तते भुवि ॥१८०
समुद्धृतौ जगाइश्च माधाइश्च त्वया प्रभो ।
तयोरुद्धारणार्थं ते श्रमलेशोऽपि नाभवत् ॥

(क्रमशः)

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Rama nath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). (Out of stock)

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada-Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof.Chintaharan Chakra varti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members),

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam** (a new Mahakavya) of MM. Kalipada Tarkacharya, Rs, 5 ;Rs, 4-8 (for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re 1—8:—Re 1—4: (for members).

---

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदः चतुःषष्ट्यधिकत्रयोदशशततम-( १३६४ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट,

संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

---

## अधस्तनग्रन्थाः

### सद्य एव प्रकाशिता भवितारः

१। हलायुध-प्रणीतं ब्राह्मण-सर्वस्वम्। अध्यापक—श्रीदुर्गामोहन-भट्टाचार्य एम. ए. सांख्यतीर्थ-सम्पादितम्।

२। माणवक-गौरवम्—म. म. श्रीकालीपदतर्काचार्यप्रणीतमपूर्वमभिनयोपयोगिनाटकम्।

३। कपालकुण्डलारूपकम्—अध्यापक—श्रीविष्णुपद भट्टाचार्य एम. ए. काव्यतीर्थसङ्कलितमभिनयोपयोगिरूपकम्।

४। चित्रचम्पूः—वाणेश्वरविद्यालङ्कारकृता—अध्यापक—श्रीजानकीनाथ-शास्त्रिसम्पादिता।

Reg. No. C 1073

Vol. XXXX. March 1958

No. 11 १८७६शकीये

४०श-वर्षस्य फाल्गुने

११म-संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)

Foreign price—1-4d

संस्कृत-साहित्य-परिषत्

श्यामबाजार, कलिकाता

# Sanskrit Sahitya Parishat Series

(Revised up to December, 1957)

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM.Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members

(Cont. to Cover 3rd Page

---

Printed by Bishnupada Bhattacharya M.A.Kavyatirtha.at Calcutta Oriental Press Private Ltd., 9, Panchanan Ghose Lane, Calcutta and published by the same from Sanskrit Sahitya Parishad, 168/1 Raja Dinendra Street, Shyambazar, Calcutta-4,

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXX. No. 11 | १८७९-शकीये फाल्गुने ४०श-वर्षस्य ११श-संख्या | March 1958.

## मतिमञ्जरी

### अपि सत्यं विजयेत ?

[ निबन्धकः—श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः ]

यद्यपि जननी पूजनीया नवेति विचारणा निरर्थिका तथापि निरपेक्षभारतराष्ट्राधिकारिभिः संस्कृतशिक्षायाः समुपयोगित्वमधुना वैदेशिकशासनविप्लुते नवीनसंस्कारसमाहिते नव्यभारते चकास्ति न वेति निर्णयार्थं विभिन्नप्रान्तवर्तिनां विद्वद्वरेण्यानां समवायेन संस्कृतायोगः कश्चन संघटितः। विदुषां नाविदितमेतत यत तत्र वङ्गप्रान्तीयाः सुगृहीतनामधेयाः श्रीमन्तः सुनीतिकुमारचट्टोपाध्यायमहोदयाः सभापतिपदमलमकुर्वन। तत्रत्याः सदस्याः समग्रे भारतखण्डे यथास्थानं पर्य्यटन्तस्तत्र तत्र प्रधानानां तीर्थङ्कराणां मतं संगृह्य सुनिपुणं विमृश्य च तेषां मतवादं प्रायो मतैक्येन दत्तवन्तः। तेषां प्रदत्तविवरणस्यांशविशेषः पत्रिकान्तरेषु प्रकाशतां गतः। तत्र प्रथमतः संस्कृतभाषैव भारतराष्ट्रस्य

राष्ट्रभाषा भवितु न्याय्येति। तदेतदधिकृत्यास्माभिर्बहुशः समालोचितं विचारार्थं निवेदितञ्च। द्वितीयस्तु सर्वेषु माध्यमिकविद्यालयेषु संस्कृत-भाषाया अवश्यपाठ्यत्वेन निर्धारणम्। एतदपि नाम समालोचनीयं यत्र संस्कृतभाषायाः स्थानं दीयताम्। यां भाषामनधिगत्य प्राक्तनाः पण्डितप्रशस्तिं प्राप्तुं नार्हन्तिस्म, या सर्वथा समुपयोगिनीति कृत्वा दैनन्दिन-कृत्यनिवहेषु व्यवहृतासीत्, यस्या भाषायाः सम्यगालोचनेनाधुनाप्यवसर-प्राप्ताः शान्तिसुखं समधिगच्छन्ति, सेदानीं राष्ट्रात् शिक्षामन्दिराद् बहि-र्वर्त्तमाना स्थानं विचिनोति! अहो! दौर्भाग्यमस्माकम्। राष्ट्रं तावद् दुर्णयनीरधौ निमज्जत् प्रतीकाराय यतते यस्य पुरतः सहजः प्रतीकारोपायो देदीप्यते तदपि नाम राष्ट्रमन्धं जातम्। उपनिषत्-समुपदिष्टानां संहिताप्रकाशितानां रत्नमहौषधीनां सेवनेन दुर्णयव्याधिर-पगमिष्यतीति किं सन्देहकोटौ राजते? तस्यायं परीक्षावसरः। यदि राष्ट्रं निर्भयं संस्कृतायोगमतमनुतिष्ठेत तदा राष्ट्रस्य कल्याणं भावि किन्तु यत्र कलिराजत्वे दुर्णयेन समुन्नतिस्तत्र किं निरपेक्षप्रदर्शितं सत्यं जेष्यति? न ज्ञायते कस्य जयः पराजयो वा किन्तु महामान्या एते हृदय-हारिणो विद्वांसः सर्वथा धन्यवादार्हास्तदेतेभ्यो हृदयाभ्यन्तरादुत्थिताः साधुवादाः प्रदीयन्ते कृतज्ञताया निदर्शनरूपेण। अपि नाम साधुवाद-प्रदानमात्रेणैतेषां हृदयममतिप्रीतं स्यात्? यद्येतेषां मतं राष्ट्रमनुवर्तततदैव महान्त इमे महान्तं सन्तोषमनुभविष्यन्ति तेषां श्रमश्च समयक्षेपक्लेशश्च साफल्यं यास्यतः सर्वोपरि तेषां सच्चिन्तया भारतं समुन्नतं जातमिति तेऽमृतरसावगाहनसुखं प्राप्स्यन्ति किन्तु तदेतद् विमृश्यते अपि सत्यं विजयेत?

---

# शिवाष्टकम्

निबन्धकः—अध्यापक-श्रीदुर्गादासगोस्वामी, एम. ए. साहित्यशास्त्री

नभःप्रसारि-मौनवत्-सहस्रतुङ्गशृङ्गधृक्-
तुषारशीर्षजह्नुजालसद्धिमाद्रिसन्निभम्।
बृहज्जटालशुभ्रभाः समाधिमग्नविग्रहं
भवं भवान्तकारिणं शिवं सशक्तिमाश्रये ॥१

श्रुति-स्मृतिप्रमाणितं पुराण-तन्त्रमन्त्रितं
सुरासुरैश्च वन्दितं मुनीन्द्रसिद्धसेवितम्।
जनैकगम्यमालयं जगच्छरण्यमीश्वरं
भवं भवान्तकारिणं शिवं सशक्तिमाश्रये ॥२

अनादिमध्यपश्चिमं विवादि-विष्णुवेधसो-
रमेयकायमव्ययं कृतार्थबाणरावणम्।
स्वमूर्धरुद्धजाह्नवीजयं विषादमद्भुतं
भवं भवान्तकारिणं शिवं सशक्तिमाश्रये ॥३

कृपाथिशार्ङ्गिणोद्धृतस्वनेत्रपद्मपूजितं
गजारिमुग्रताण्डवं पुरारिमर्दितस्मरम्।
प्रजेशयज्ञनाशकं विधेरकार्यशासकं
भवं भवान्तकारिणं शिवं सशक्तिमाश्रये ॥४

श्मशानभूमिचेष्टितं पिशाचभूतवेष्टितं
शवास्थिदामभूषितं चितास्थभस्मरूषितम्।
जरद्गवेन्द्रवाहनं बत ! त्रिलोकपावनं
भवं भवान्तकारिणं शिवं सशक्तिमाश्रये ॥५

सुधीभिरन्तरात्मनि प्रमोदभावनिर्भरै-
र्विमृग्यमाणवैभवं सदाष्टमूर्तिमिष्टदम् ।
विचित्रकृत्तिवाससं सुधामयूखशेखरं
भवं भवान्तकारिणं शिवं सशक्तिमाश्रये ॥६

तुरीयमप्यहो जगद् भवस्थितिक्षयप्रभुं
दधद्गिरीन्द्रकन्यकं यतीन्द्रमप्यहो स्वयम् ।
वितीर्णमुक्तिसम्पदं भवार्तिभीतिनाशनं
भवं भवान्तकारिणं शिवं सशक्तिमाश्रये ॥७

रवीन्दुवह्निलोचनत्रयं सदास्यपञ्चकं
कुठारपाशकाङ्कुशाद्यनेकशस्त्रशोभिनम् ।
महाष्टसिद्धिदायकं सदाशुतोषमीप्सितं
भवं भवान्तकारिणं शिवं सशक्तिमाश्रये ॥८

दुर्गादासकवेर्महेश्वरकृपालेशार्थिनः शंसिते
स्तोत्रे श्रोत्रसुखे महेशचरिताख्यायिन्यमन्दाक्षरे ।
सुश्लोकैरिह पञ्चचामरमयै रान्दोलितैश्छन्दतः
श्रीशम्भुर्व्यजनैरिवातिसुभगैः संवीजितः प्रीयताम् ॥९

---

# योगिभक्तचरितम्

( काव्यम् )

(निबन्धकः—श्रीकाश्यपकविः)

## चतुर्थः सर्गः

( पूर्वानुवृत्तम् )

राणीगञ्जमथ प्राप्तो भक्तानां स सपर्यया ।
सन्तुष्टः स्वक्रियानिष्ठः कञ्चित कालमयापयत ॥१

तत्र वासं प्रकुर्वाणस्तत्रत्यैर्मानवैरसौ ।
विज्ञातः स्वेन रूपेण सूर्यः समुदितो यथा ॥२

तत्र स्वल्पेन कालेन तत्प्रभावो नृणां गणे ।
प्रचकाशे विनापीच्छां सम्महो देहिनामभूत ॥३

तस्य वक्त्रात प्रसङ्गेन स्वच्छा धर्मोपदेशना ।
प्रावर्त्तत सदा गोष्ठ्यां पर्वतादिव निर्झरः ॥४

संख्यातीतजनास्तत्र धर्मामृतपिपासया ।
मिलितास्तृप्तिमासेदुः श्रद्धाश्चात्र परां श्रिताः ॥५

भक्तानां सुप्रबन्धेन तत्र धर्मसभाः क्रमात ।
अनेकाः समजायन्त लोककल्याणहेतवः ॥६

तद् व्याख्यानप्रकर्षेण गाम्भीर्यादिगुणेन च ।
साक्षाद् गोष्पतिमायातं मेनिरे तं जनोच्चयाः ॥७

गोष्ठ्यां महासभायां वा व्याख्यानं तस्य कुर्वतः ।
भावावेशवशाद् भावा दृश्यन्ते स्म पृथग् विधाः ॥८

कदाचिद् वीर्यदीप्तेन वचसा धार्मिके विधौ ।
प्रावर्त्तयद् दृढप्रज्ञः सभायां सङ्गतानसौ ॥६

कदापि भगवत्तत्त्वं व्याचक्षाणो विचक्षणः ।
वाष्पप्रवाहसंसिक्तः समाधिं जोषमास्थितः ॥१०
विरुद्धमतसङ्घातं वारयन् ददृशे क्वचित् ।
बौद्धसिद्धान्तनिर्हन्ता भगवान् शङ्करो यथा ॥११
कदाप्यत्यर्थमासन्नः कदाचिद् दूरतो बभौ ।
लोकानामेष वैचित्र्याद् वाङ्मयस्य प्रसर्पतः ॥१२
नानाकारः प्रतीयेऽसौ विचित्रात्मा नटो यथा ।
नटो विचित्रः कामेन सोऽकामेनेति वै भिदा ॥१३
यथाकालं सदाचारमाचरन्नित्यमेव सः ।
अन्वतिष्ठद् यथाकालं पूर्ववद् योगमात्मनः ॥१४
शिष्यानशिक्षयत काले काले चोपाचरत सभाम् ।
काले सृष्ट्वा सुहृद्गोष्ठीं परां प्रीतिमविन्दत ॥१५
एवं कालविचारेण सर्वं कृत्यमुपेयुषः ।
प्रनष्टं नाभवत् किञ्चित् सर्वं प्रावर्द्धत क्रमात् ॥१६
विषण्णास्तद्वियोगेन श्रीरामपुरवासिनः ।
तं स्मरन्ति स्म निर्व्याजमिष्टदेवमिवोचितम् ॥१७
वृन्दावनं परित्यज्य श्रीकृष्णे मथुरां गते ।
व्याकुलाः समजायन्त यथा हि व्रजयोषितः ॥१८
श्रीरामपुरमुत्सृज्य गते तस्मिन् महात्मनि ।
भक्तास्तत्पुरवार्त्तिन्यस्तथैव व्याकुलाः स्त्रियः ॥१९
क्षेतुदेवीति विख्याता तासु काचिद् गुरुप्रिया ।
प्रैषयद् भक्तिभावेन पत्रं योगिवरान्तिके ॥२०
भक्तिव्याकुलता चापि लोकातीता निवेदिता ।
यत्र नानाविधप्रश्नास्तात्त्विकाः सन्निवेशिताः ॥२१
गुरुपूजोपयुक्तानि द्रव्याण्यपि च कानिचित् ।
तेन सार्द्धं तया तावत् प्रेषितानि गुरोः पदे ॥२२

सुसम्प्रीतेन चित्तेन तेन दत्तं तदुत्तरम् ।
इत्थं गभीरतत्त्वानि प्रकाशं यत्र लेभिरे ॥२३
विपत्तिर्नास्ति भक्तस्य भक्तिर्यापद्विरोधिनी ।
ईश्वरे भक्तिमान् योगी नियतं भगवत्प्रियः ॥२४
सर्वाः सुसम्पदस्तत्र नित्यं वासं प्रकुर्वते ।
अभक्तः स्वेन दोषेण विपदं लभते पराम् ॥२५
भक्तः कष्टं परिप्राप्तं कठोरमपि संसृतौ ।
स्वदोषोचितं दण्डं मन्यते भोग्यमात्मना ॥२६
भक्तो दोषाद् भयं याति न तु दोषस्य दण्डतः ।
दण्डाद् विभेत्यभक्तस्तु न तु दोषात् कदाचन ॥२७
भक्तस्य सेवा सर्वत्र संसारे शान्तिकारणम् ।
तथा भगवतः सेवा नान्यतः शान्तिसम्भवः ॥२८
विषयासक्तचित्ता ये सांसारिकसुखे रताः ।
विस्मरन्ति परेशानं मूढ़ास्ते निष्फलोदयाः ॥२९
सुखे दुःखे समं भक्ताः स्मरन्ति परमेश्वरम् ।
क्षणोऽप्यस्य न संयाति भगवत्स्मरणं विना ॥३०
आत्मानं भगवद्भृत्यं मन्यते भक्तिमान् नरः ।
सर्वं भगवतः कृत्यं भृत्यवत् कुरुते च सः ॥३१
योगं क्षेमञ्च भक्तानां भगवान् वहति स्वयम् ।
भगवत्येव ये सर्वमर्पयन्ति दृढ़ाशयाः ॥३२
नियतं भगवद्भक्तो मज्जत्यानन्दसागरे ।
अभक्तस्य भवानन्दस्तदन्ते गोष्पदायते ॥३३
भक्तो भक्तिप्रभावेण समुत्तरति सागरम् ।
हुताशनोऽपि प्रोद्दीप्तो न तं दहति लेशतः ॥३४
न राजदण्डान्नो वज्रात् न शूलान्नापि चक्रतः ।
भक्तो भयमवाप्नोति भक्तं रक्षति केशवः ॥३५

हस्तिपादेन दलितो न शैलादपि पातितः ।
म्रियते भगवद्भक्तः प्रह्लादस्तन्निदर्शनम् ॥३६
प्रियो भक्तस्य भगवान् भक्तो भगवतस्तथा ।
भगवद्भक्तिरेवास्य परमार्थप्रदायिनी ॥३७
अभिजानाति भक्त्यैव भक्तः श्रीपुरुषोत्तमम् ।
विदित्वा तं विशेषेण परमां शान्तिमृच्छति ॥३८
तस्मात् सर्वप्रयत्नेन हित्वा वैषयिकीं रतिम् ।
अनन्यशरणां भक्तिं विन्दस्व पुरुषोत्तमे ॥३९
इत्येवमुपदेशानां सम्बन्धेन तदा तदा ।
बहु पत्राणि दत्तानि ततसमीपे महात्मना ॥४०
येषामालोचनेनाद्य स्वच्छतां याति मानसम् ।
अभयं महदाप्नोति सत्कृत्ये भजते रतिम् ॥४१
अभक्तो भक्तिमायाति दुःखं मुञ्चति दुःखितः ।
सर्वत्र जयमाप्नोति परमेशप्रसादतः ॥४२
राणीगञ्जेऽपि स स्थित्वा कञ्चित् कालं क्रियापरः ।
तथैव तत्र लोकेषु स्वप्रतिष्ठामवर्त्तयत् ॥४३
कालीघट्टपुरे पुण्ये तस्मिन् काले महोद्यमैः ।
प्राचारयन्त स्वं धर्मं खृष्टजातिपुरोधसः ॥४४
ब्राह्मधर्मप्रवक्तारस्तथा भिन्नगतिं जगुः ।
सनातनस्य धर्मस्य तेनाजायत विप्लवः ॥४५
तद्विप्लवनिरोधाय कालीघट्टे तदा गतिम् ।
उपयुक्ततमां मेने वाचि सिद्धः स योगिराट् ॥४६

कतिपयैस्तरुणैरथ साग्रहैः
स सहितः समपेक्षितवस्तुभृत् ।
जनहिताय जगाम समुत्सुकः
पुरमदः परमङ्गलकृच्चिरम् । ४७

पुरं तदासाद्य निजानुयात्रिभिः
विद्यालयं स्थापयितुं स कश्चन ।
स्वाभीष्टरूपं समवाप वासनां
शिक्षापथे स्वेष्टफलानि वीक्षितुम् ॥४८
पुरा परस्वामिकशिक्षणालये
यो यः फलं नाप मनोरथाचलः ।
तं तं विधातुं सफलं स्वतन्त्रधीः
विद्यालयं स्थापितवान् महोद्यमैः ॥४९
स्वकल्पनाया अनुरूपशिक्षणं
प्रवर्त्तयामास स तत्र तत्परः ।
स्वयं सदा तत् समवेक्षणं व्यधात्
बभूव विद्यालयवर्द्धनं क्रमात् ॥५० (क्रमशः)

---

# सुर-गुरु-वन्दनम्

निबन्धकः—अध्यापक-श्रीदुर्गादास-गोस्वामी, एम॰ ए॰, साहित्यशास्त्री

हित्वा पीठाब्जमन्तः स्फुरितपरिमलाकृष्टभृङ्गं स हंसो
यस्याः पादारविन्दक्षरदमृतरसास्वादमासाद्य सद्यः ।
हर्षोद्रेकात् तनोति श्रुतिसुभगकलोद्गीतजालानि शश्वत्
सा वाक् प्रज्ञानभासा व्यपनयतु महामोहमस्मन्मनस्तः ॥१
सर्गस्थितिलयकारणभूतं सच्चितसुखमयमेकमसङ्गम् ।
ईशं विभुमजमद्भुतलीलं मायाव्यवहितमच्युतमीडे ॥२
विष्णोर्नाभिसरोजसम्भवमलं वेदांश्चतुर्भिर्मुखै-
रुद्गातारमशेषवस्तुनिलयं स्रष्टारमेतज्जगत् ।
वीणारावसनाथभावगहनैर्गीतैर्गिरा मोहितं
वन्दे हंसवरासनं गुणमयं भक्त्या पुराणं मुनिम् ॥३

बाल्ये सम्पूर्य वेणुं विहरति यमुनासैकते गोपबालैः
पश्चाद् गोपीपरीतो विलसति विविधं राधिकाप्रेममुग्धः ।
नेता पाण्डोः सुतानां कुरुकुलसमरे यश्च भूभारहारी
सोऽव्याद् ब्रह्माण्डबीजं सजलघनरुचिर्वासुदेवश्चिरं नः ॥४

ध्यानातीतं परेशं मृतिजनिरहितं नीलकण्ठं स्मरारिं
रुद्रं किञ्चाशुतोषं क्रतुकदनकरं शङ्करञ्चाष्टमूर्तिम् ।
मान्यं योगीश्वराणामपि खलु नियतं योषिदङ्गावलम्बं
वन्दे चन्द्रार्द्धचूड़ं प्रभुमखिलभुवोऽप्यप्रियं दुर्गतानाम् ॥५

त्वमाद्या शक्तीनां विहरसि मृगेन्द्रे दनुजहा
कुमारः सेनानीर्गणपतिरथो मन्त्रणपटुः ।
महामोहं वाणी व्यपनयति लक्ष्मीविभवदा
न किं याच्यं त्वत्तो गिरिशदयिते ! तत् कथय नः ॥६

कैशोरे यस्य कीर्तिस्त्रिभुवनविदिता चापभङ्गादिकृत्यै-
र्वासः सभ्रातृदारं प्रतिभयविपिने तातसत्यस्य गुप्त्यै
वृत्तिर्मोहादिबद्धप्रकृतिरिव यशः पापपौलस्त्यघाते
कान्तात्यागेऽप्युदारः स मनसि रमतां शाश्वतं राघवो नः ॥७

क्षौणी यस्याः प्रसूतिः क्रतुभुवि जनको ब्रह्मनिष्ठश्च तातः
किंवा सीतेतिनामाक्षरयुगलमलं ख्यापने यद्विशुद्धेः ।
उद्वाहः सूर्यवंशे स्वयमपि कमला पावके यत्परीक्षा
त्यक्तारण्येथ साध्वी रघुपतिदयिता वीरसूः पातु सा नः ॥८

काले मृदुः कुसुमवत्तु पविवच्च तीक्ष्णो-
मौनी वशी शुचिमनाः किल वीतनिद्रः ।
छायेव न त्यजति राममगाधसत्त्वो-
यो लक्ष्मणः स खलु वः प्रकरोतु भद्रम् ॥९

---

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

## श्रीचैतन्यचरितामृते मध्यलीलायां

### प्रथमः परिच्छेदः

( पूर्वानुवृत्तः )

तावास्तां ब्राह्मणौ जात्या नवद्वीपकृतालयौ ।
तौ न नीचानसेवेतां नापि नीचसमाश्रितौ ॥
एक एव तयोर्दोषः पापकर्मानुशीलनम् ।
नामाभासेन ते नूनं दह्यन्ते पापराशयः ॥
तव नाम गृहीत्वा तौ निन्दनं तव चक्रतुः ।
तदेव भवतो नाम विमुक्तेः कारणं तयोः ॥
आवां जगाइ-माधाइ-युगलादपि निश्चितम् ।
कोटिकोटिगुणैश्चापि पाप्मानौ पतिताधमौ ॥
आवान्तु म्लेच्छजातीयौ सततं म्लेच्छसङ्गिनौ ।
म्लेच्छादेशकरौ नित्यं गोविप्रद्रोहिसङ्गतौ ॥
आवां हस्तगले वद्धौ स्वकृतेन कुकर्मणा ।
घृण्ये विषयविड्गर्त्ते सुचिराय निपातितौ ॥
अस्मदुद्धारणे शक्तो न कोऽप्यस्ति जगत्त्रये ।
त्वामेवैकं विना कश्चिन्नान्यः पतितपावनः ॥
आवां तारयितुं शक्तिं निजां चेद्दर्शयिष्यसि ।
पतितपावनाख्या ते तदा साफल्यमेष्यति ॥

ब्रवीम्येकं वचः सत्यं शृणु त्वं करुणामय ।
आवां विना कृपापात्रं नैवास्ति भुवने तव ॥१६०

आवयोः करुणां कृत्वा स्वकृपां सफलां कुरु ।
ब्रह्माण्डमखिलं तावत् कृपाशक्तिं तवेक्षताम् ॥

"तथाहि गोस्वामिपादोक्तः श्लोकः—

न मृषा परमार्थमेव मे शृणु विज्ञापनमेकमग्रतः ।
यदि मे न दयिष्यसे तदा दयनीयस्तव नाथ दुर्लभः ॥११॥"

विवेच्यायोग्यमात्मानं क्षुब्धं भवति नौ मनः ।
महांस्तु जायते लोभस्तथापि भवतो गुणैः ॥

वामनोऽपि स्वहस्तेन यथा चन्द्रं जिघृक्षति ।
आवयोरियमाकाङ्क्षा तथा मनसि जायते ॥

तथाहि गोस्वामिपादोक्तः श्लोकः—

भवन्तमेवानुचरन्निरन्तरं प्रशान्तनिःशेषमनोरथान्तरः ।
कदाहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि स नाथ जीवितम् ॥१२॥"

श्रुत्वोक्तं प्रभुणा 'रूपाकर्णय श्रेष्ठ लेखक ।
युवां द्वौ भ्रातरौ नूनं मम प्राक्तनकिङ्करौ ॥

अद्य प्रभृत्युभौ नाम्ना युवां रूप-सनातनौ ।
दैन्यं मुञ्चतमन्तर्मं युष्मद्दैन्येन भिद्यते ॥

लिखित्वा दैन्यपत्रं मे युवाभ्यां प्रेरितं मुहुः ।
तेन तेन च पत्रेण ज्ञातवानस्मि वां मनः ॥

युवयोर्हृदयाकाङ्क्षां पत्रद्वारा विजानता ।
युवां शिक्षयितुं श्लोको लिखित्वा प्रेरितो मया ॥

"तथाहि वाशिष्ठरामायणे—

पर-व्यसनिनी नारी व्यग्रापि गृहकर्मसु ।
तदेवास्वादयत्यन्तर्नवसङ्गरसायनम् ॥१३॥"

नासीत प्रयोजनं किञ्चिद् गौडदेशागमेन मे ।
युवयोर्दर्शनायैव मयेहागमनं कृतम् ॥
एषा मे मानसी वाणी न केनाप्यवगम्यते ।
आहुः सर्वं कथं प्राप्तो रामकेलिमसाविति ॥
साधुवृत्तं समायातौ भ्रातरौ द्वौ ममान्तिकम् ।
गृहं यातं भयं किञ्चित कुरुतं मा मनस्यपि ॥२००
प्रतिजन्म युवां द्वौ हि भ्रातरौ मम किङ्करौ ।
अचिरेण युवां कृष्णो नूनं निस्तारयिष्यति ॥
इत्युक्त्वा तेन हस्ताभ्यां गृहीते शिरसी तयोः ।
भ्रातरौ च प्रभोः पादौ न्यधत्तां स्वस्वमूर्द्धनि ॥
प्रभुणा द्वौ समालिङ्ग्य प्रोक्तं भक्तगणं प्रति ।
सर्वे भवन्त एतौ द्वौ कृपयैवोद्धरन्त्विति ॥
ततो भक्ताश्च जानन्तस्तौ द्वौ प्रति कृपां प्रभोः ।
सानन्दमानसाः सर्वेऽकुर्वन हरिहरिध्वनिम् ॥
नित्यानन्दो मुकुन्दश्च हरिदासो गदाधरः ।
श्रीवासजगदानन्दवक्रेश्वरमुरारयः ॥
इत्येषां चरणान धृत्वा पतितौ द्वौ सहोदरौ ।
सर्वेऽब्रुवन प्रभुं प्राप्तौ दिष्ट्या धन्यौ युवामिति ॥
प्रतियानावकाशे तौ सर्वान सम्प्रार्थ्य सम्मतिम् ।
ऊचतुः प्रभुपादेभ्यः किञ्चन सप्रश्रयं पुनः ॥
इतः स्थानात प्रतिष्ठस्व प्रभो नात्र प्रयोजनम् ।
अपि चेद गोडभूपालस्त्वयि भक्तिं करोत्यसौ ॥
तथापि यवनो जात्या नात्र विश्वसिमो वयम् ।
एतावांस्तीर्थयात्रायां संघट्टो नोत्तमा प्रथा ॥
यं यथानुप्रयान्त्येता जनानां लक्षकोटयः ।
आवृन्दावनयात्रायां तस्य नेत्थं क्रमो भवेत ॥२१०

प्रभोर्यद्यपि भूतार्थं भयं किञ्चिन्न विद्यते ।
तथापि लौकिकी लीला लोकवच्चेष्टितञ्च ते ॥
इत्युक्त्वा तौ प्रभोः पादौ वन्दमानौ गृहं गतौ ।
ततः प्रस्थातुकामोऽभूत्तस्माद् ग्रामान्महाप्रभुः ॥
प्रातरुत्थाय कानाएर्नाटशालां जगाम सः ।
ददृशुः कृष्णचारित्रलीलां सर्वे सङ्गताः ॥
तत्र तस्यां विभावर्यां मनसाचिन्तयत् प्रभुः ।
न सुष्ठुर्जनसंघट्ट इत्यवादीत् सनातनः ॥
एतावद्भिर्जनैः सार्द्धं यास्यामि मथुरां यदि ।
न प्राप्स्यामि सुखं किञ्चिद्रसभङ्गो भविष्यति ॥
गमिष्याम्यहमेकाकी सार्द्धमेकजनेन वा ।
श्रीवृन्दावनयात्रा मे तदा शोभिष्यते खलु ॥
इत्यसौ चिन्तयन् प्रातर्गङ्गायां स्नानमाचरत् ।
नीलाचलं गमिष्यामीत्युक्त्वा प्रातिष्ठत प्रभुः ॥
स शान्तिपुरमायातः क्रमेणैवं व्रजन् पथा ।
अहानि पञ्चसप्तानि तस्थावाचार्यमन्दिरे ॥
आनाय्य श्रीशचीदेवीं भक्त्या च प्राणमत् प्रभुः ।
तस्या हस्ताच्च भिक्षान्नं सप्ताहानि गृहीतवान् ॥
आज्ञां तस्या गृहीत्वासौ पुनः प्रस्थातुमुद्यतः ।
विनयेन निजान् भक्तान् सर्वानापृच्छत प्रभुः ॥२२०
जनद्वयान्वितो नीलाचलं यास्यामि निश्चितम् ।
आगत्य रथयात्रायां यूयं प्राप्नुत मामिति ॥
आचार्यो बलभद्रश्च श्रीदामोदरपण्डितः ।
द्वाविमौ प्रभुणा सार्द्धं नीलाचलमुपागतौ ॥
कियतो दिवसांस्तत्र स्थित्वा वृन्दावनं प्रति ।
रात्रौ चलितुमारेभे प्रभुर्लोकैरलक्षितः ॥

तेन केवलमाचार्यो बलभद्रः सह स्थितः ।
नानाभावैर्गतः काशीं झाड़िखण्डपथेन सः ॥
काश्यां दिनानि चत्वारि स्थित्वा वृन्दावनं गतः ।
वनानि द्वादशापश्यत प्राग् दृष्ट्वा मथुरां प्रभुः ॥
लीलास्थलं विलोक्यासौ प्रेम्णा विह्वलतां गतः ।
मथुराया बहिष्कृत्य बलभद्रो महाप्रभुम् ॥
गङ्गातीरपथेनैव प्रयागञ्चापनीतवान् ।
श्रीरूपः प्रभुमागत्य तत्रैव समगच्छत ॥
प्रणत्य दण्डवद्भूमौ पतितस्तस्य पादयोः ।
तं रूपं परमानन्दः समालिङ्गन्महाप्रभुः ॥
ततस्तं शिक्षयन् वृन्दावनं प्रेषितवान् प्रति ।
आजगाम स्वयं वाराणसीधाम महाप्रभुः ॥
मिलितः प्रभुणा सार्द्धं काशीमेत्य सनातनः ।
तत्रावस्थाय मासौ द्वौ प्रभुस्तञ्चाप्यशिक्षयत ॥२३०
मथुरां गमयामास तं भक्तिबलवर्द्धितम् ।
सन्न्यासिनोऽनुगृह्यासौ गतो नीलाचलं ततः ॥
षड् वर्षाण्येवमेवासौ विलासं कृतवान् प्रभुः ।
जगामेतस्ततो जातु क्षेत्रे वा जातु सोऽवसत ॥
सङ्कीर्त्तनविलासं स चक्रे भक्तैः सदा मुदा ।
विलासं कृतवान् प्रेम्णा श्रीजगन्नाथदर्शने ॥
सूत्राणि मध्यलीलाया इमानि कृतवानहम् ।
श्रूयन्तामन्त्यलीलाया भक्तैः सूत्राणि साम्प्रतम् ॥
यदा वृन्दावनान्नीलाचलं प्राप्तो महाप्रभुः ।
तत्रैवाष्टादशाब्दान सोऽवात्सीन्नैव ययौ क्वचित् ॥
तत्र गौड़ीयभक्तास्ते प्रतिवर्षं समागताः ।
प्रभुणा चतुरो मासान् मिलिता अवतस्थिरे ॥

नृत्यकीर्त्तनसङ्गीतैर्विललास स सन्ततम् ।
आचण्डालञ्च सर्वेभ्यः प्रेमभक्तिं ददौ प्रभुः ॥
गोस्वामी पण्डितो वक्रेश्वरदामोदरौ तथा ।
हरिदास-भवानन्द-जगदानन्द-शङ्कराः ॥
काशीश्वरश्च गोविन्दः परमानन्दकः पुरी ।
दामोदरस्वरूपश्च ते नीलाचलमावसन् ॥
श्रीरामानन्दरायाद्या भक्ता ये क्षेत्रवासिनः ।
अतिष्ठन प्रभुणा सार्द्धं ते सर्वेऽपि निरन्तरम् ॥२४०
नित्यानन्दस्तथाद्वैत-वासुदेव-मुरारयः ।
श्रीवासश्च मुकुन्दश्च भक्ता विद्यानिधिस्तथा ॥
प्रत्यब्दं चतुरो मासांस्तस्थुरभ्येत्य ते प्रभुम् ।
तैः सर्वैरभवंस्तस्य विलासा विविधाः प्रभोः ॥
अथ श्रीहरिदासस्य सिद्धिप्राप्तिर्महाद्भुता ।
स्वयं मयाप्रभुर्यस्य कृतवांश्च महोत्सवम् ॥
रूपगोस्वामिनस्तावत् पुनरागमनं ततः ।
शक्तिः सञ्चारिता तस्य हृदये प्रभुणा स्वयम् ॥
अथ दण्डितवान् खुल्लहरिदासं महाप्रभुः ।
प्रभुं दण्डितवान्वाचा श्रीदामोदरपण्डितः ॥
श्रीसनातनगोस्वामी पुनः प्रत्याजगाम च ।
ज्यैष्ठे मासि चकारासौ प्रभुस्तस्य परीक्षणम् ॥
तुष्टेन प्रभुणा वृन्दावनं स प्रेरितस्ततः ।
अथाद्वैतस्य हस्तेन भुक्तवानद्भुतं प्रभुः ॥
विधाय विजने देशे नित्यानन्देन मन्त्रणाम् ।
ततः प्रेमप्रचाराय प्रभुः प्रेरितवानमुम् ॥

( क्रमशः )

---

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Rama nath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). (Out of stock)

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam** (a new Mahakavya) of MM. Kalipada Tarkacharya, Rs, 5 ;Rs, 4-8 (for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re 1—8:—Re 1—4: (for members).

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदः चतुःषष्ट्यधिकत्रयोदशशततम-( १३६४ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट्,

संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

---

# अधस्तनग्रन्थाः

## सद्य एव प्रकाशिता भवितारः

१। हलायुध-प्रणीतं ब्राह्मण-सर्वस्वम्। अध्यापक—श्रीदुर्गामोहन-भट्टाचार्य एम. ए. सांख्यतीर्थ-सम्पादितम्।

२। माणवक-गौरवम—म. म. श्रीकालीपदतर्काचार्यप्रणीतमपूर्वमभिनयोपयोगिनाटकम्।

३। कपालकुण्डलारूपकम्—अध्यापक—श्रीविष्णुपद भट्टाचार्य एम. ए. काव्यतीर्थसङ्कलितमभिनयोपयोगिरूपकम्।

४। चित्रचम्पूः—वाणेश्वरविद्यालङ्कारकृता—अध्यापक—श्रीजानकीनाथ-शास्त्रिसम्पादिता।

Reg. No. C 1073

Vol. XXXX.

No. 12

४०श-वर्षस्य

१२श-संख्या




April 1958

१८७९ शकवे

चैत्रे

मासे

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

संस्कृत-साहित्य-परिषत्

श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—मूल्यकषट्कम् ६)

Foreign price—1-4d

# Sanskrit Sahitya Parishat Series

( **Revised up to December, 1957** )

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chaudra Siddhantabhushan. Re. 1-4; *Re*. 1. (for member).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan. Bhattacharya. (Out of stoke.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacbarya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Re. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. (*for* members). Rs. 2. 8 ; Rs. 2.

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8. (Out of stock:)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri- As. 4.

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Sbastri, M. A', B. L. Ph, D. Re. 1-8 ; Re. 1-4. ( for members ).

10. **Grahayaga-tattvam** of Raghunandana Bhaṭtacharya—Edited by Pt. Satish Chandra Siddhantabhushan. As, 14; As. 10 (for members).

( Cont. to. Gover 3rd Page )

---

Printed by Bishnupada Bhattacharya M. A. Kavyatirtha. at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghosc Lane, Calcutta and published by the same form Sanskrit Sahitya parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta-4.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXX. No. 12 | १८७९-शकीये चैत्रे ४०श-वर्षस्य १२श-संख्या | April 1958.

नमो नमः शाश्वतबान्धवेभ्यः संवत्सरान्ते विनयान्वितानाम् ।
एषोऽञ्जलिर्दोषशतं क्षमन्तां दयालवस्ते सुहृदां प्रकृत्या ।

## मतिमञ्जरी

### एषा रक्षति रक्षिता

(निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः)

सूक्तमिदं केनचिद् विदुषा यदा कलिकाता-विश्वविद्यालयेनैच्छिकी संस्कृतशिक्षा विद्यार्थिनीनां कृते प्रवर्तिता, तदैव प्रथमपरशुप्रहारो वङ्गदेशे संस्कृतभाषामहीध्रमूलेषु । ततो महाजनप्रवर्तितदिशा क्रमशस्तादृशप्रहार-परम्परया प्रायश्छिन्नमूलोऽधुना प्रथितमूलोऽपि महीरुहः सः । गृहकर्मनिरता अपि बह्वः कदाचिदभिमतस्तवादिपाठेन वा कदाचिद् रामायणादिगानेन वा कदाचिद् गीतादिव्याख्यानेन वा यं धर्म्यं तृप्तिविशेषमलभन्त, सुतरां सोऽप्यधुना विलुप्तप्रायो गार्हस्थ्यजीवनेषु । अथ च तत्रैव विश्व-

विद्यालये समधिकसंख्यकाः शिक्षार्थिन्य उच्चतरसंस्कृतविद्याधिगमाय कृतप्रवेशा दृश्यन्ते। मातृगुणेन यदि बाल्यात् प्रभृति शिशवः संस्कृत-भावधारया परिचिताः स्युस्तदा जीवनावधि किञ्चित् पाथेयमपि संगृहीतं भवेत्, तदेतत् निर्व्याजं सत्यं जानन्तोऽपि विद्याप्रणयिनो नागरिकाः यत् नानुतिष्ठन्ति, तत्रास्माकं दुरदृष्टमेव कारणम्। प्राथमिकशिक्षायाः संस्कृतशिक्षा सप्रयोजना, तदेतद् विमृश्य वङ्गीयसंस्कृतशिक्षापरिषत्-सभापतिभिः प्राथमिकशिक्षाकेन्द्रेषु संस्कृतशिक्षायतनानां सौहार्दबहुला राष्ट्रियसहयोगिता समाकाङ्क्षिता। तथा सति बाल्यादेव चरित्रसंघटनं संस्कृतशिक्षायाः संरक्षणं च भवितुमर्हतः। अस्माभिर्विशेषेण ज्ञातं यदन्ध्रप्रदेशे केरलराज्ये केचन खृष्टीयधर्मावलम्बिनः केवलं भारतीय-भावधारायाः शान्तिलाभार्थं पितामहादिक्रमेण चतुष्पाठीशिक्षाप्रणाल्यां संस्कृतमभ्यस्यन्त्यधुनापि। विविधविधानप्रणयनेन राष्ट्रं पर्याकुलं दृश्यते दुर्नयप्रतिरोधकृत्येषु। दृश्यते च सर्वत्रैव वैफल्यं सर्वथा। किं बहुना यदेतत् पवित्रं शिक्षामन्दिरं तदपि कलुषितं दुर्नीतिकालिम्ना। यत्र वङ्गदेशे कदाचिन्महात्माश्विनीकुमारदत्तप्रतिष्ठिते विद्यालये वैदेशिकविद्या-लयपरिदर्शकाश्छात्राणां साधुतां पर्यालोक्य नितरां विस्मिताः सन्तुष्टाश्च जातास्तत्रैव वङ्गदेशेऽधुना परीक्षाकेन्द्रेषु शासकगोष्ठ्याः सशस्त्रं समागमं दृष्ट्वा कस्य सचेतसो हृदयं लज्जया नावनतं भवति? मनुष्यत्वसम्पा-दका उपदेशा ऋषिभिस्तदनुगामिभिश्च संस्कृतभाषयोपनिबद्धाः। संस्कृत-भाषाज्ञानं विना तेषां तेषां सदुपदेशानां समनुवर्त्तनं सुतरामसम्भवम्। उपेक्षितापि या संस्कृतभाषा केवलं मातृस्नेहेनास्मान् न परिजहाति, तदर्थमस्माकं किमपि कर्तव्यं नास्ते किमु? स समयो नातिदूरे,— यदास्माभिरवश्यं संस्कृतसरणिर्ध्वंसमार्गो वा समाश्रयणीयः। पुण्यं भारतभूतलमन्याय्याचरणदूषितं न जीविष्यति। अतः सविनयं मद-कलितानामपि बुद्धिमतां पुरतः शुभबुद्धेरुन्मेषक्षणे विशेषविवेचनायेदं समुपस्थाप्यते। यत्र प्राथमिकशिक्षात एव संस्कृतशिक्षा सप्रयोजना, तत्र

का कथा माध्यमिकशिक्षायाः। अधुना माध्यमिकशिक्षणे यथैषा भाषा निर्वासिता न स्यात्, तथा शिक्षाधिकर्तृभिर्विवेचयितव्यम्। यत्र शिक्षायामङ्कविद्यासहितभाषात्रय-(संस्कृतभाषा, आङ्गलभाषा, मातृभाषा) शिक्षणमेव पर्याप्तं तत्र विषयान्तराणां निर्देशो न कार्यः। पाठ्यसूची-वस्तुबाहुल्येन दुर्णयावकाशो न देयः। विषयबाहुल्यान्न कस्मिन्नपि विषये ज्ञानं जायते बालानाम्। अपि च भाषात्रयशिक्षणं परस्परसापेक्षत्वेन न दुष्करम्। अङ्कविद्याप्यवश्यं शिक्षणीया। इतिहासभूगोलविज्ञानानां ज्ञानं पश्चादपि समाकलयितुं शक्यत एव। अतो विषयान्तराणां बाहुल्यं प्रदर्श्य संस्कृतभाषाया उपेक्षा न कार्येति सर्वतो विचिन्तनीयं विद्वद्वरेण्यैर्नेतृस्थानीयैरिति शम्।

---

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

## श्रीचैतन्यचरितामृते मध्यलीलायां

### प्रथमः परिच्छेदः

( पूर्वानुवृत्तः )

ततो वल्लभभट्टोऽसौ प्रभुणा मिलितोऽभवत्।
अमुष्मै कृष्णनाम्नोऽर्थो विवृतः प्रभुणा ततः॥
रामानन्दात् प्रभुः कृष्णकथामश्रावयत्ततः।
प्रद्युम्नमिश्रमाज्ञाप्य तद्गुणान् कथयन् स्वयम्॥२५०

रामानन्दानुजं गोपीनाथाख्यं पट्टनायकम् ।
राज्ञा हनिष्यमाणं तं ररक्ष श्रीमहाप्रभुः ॥
रामचन्द्रपुरी भीत्या भिक्षान्नं समकोचयत् ।
वैष्णवानां विचिन्त्यार्तिमर्द्धांशं न्यदधात्ततः ॥
ब्रह्माण्डस्यान्तरे सन्ति भुवनानि चतुर्दश ।
जीवा वसन्ति यावन्तो भुवनेषु च तेष्वपि ॥
यात्रिकव्यपदेशेन ते गृह्णन्तो नराकृतिम् ।
निरीक्षाञ्चक्रिरे नीलाचलमागत्य च प्रभुम् ॥
सर्व एव प्रभोर्भक्ताः श्रीवासादय एकदा ।
चक्रुः सङ्कीर्तनं तत्र प्रगायन्तः प्रभोर्गुणान् ॥
तदाकर्ण्य प्रभुः क्रुद्धोऽवदद् भक्तगणं प्रति ।
क्रियते कीर्तनं कस्य कृष्णनामगुणान् विना ॥
कर्तुमुद्धतमाचारं युष्माभिः काङ्क्षितं यतः ।
ततः स्वातन्त्र्यमाश्रित्य विश्वध्वंसः कृतोऽधुना ॥
अत्रैवावसरे लोकैः समन्तात् कोटिकोटिशः ।
जय श्रीकृष्ण चैतन्येत्युक्त्वा कोलाहलः कृतः ॥
जय महाप्रभो गौर श्रीव्रजेश्वरनन्दन ।
जगतां तारणाय त्वमवतीर्णोऽसि हे प्रभो ॥
महतीमार्तिमासाद्य सुदूराद् वयमागताः ।
प्रभो दर्शनदानेन कुरु नश्चरितार्थताम् ॥२६०
इति तद्दैन्यमाकर्ण्य द्रुतचित्तोऽभवत् प्रभुः ।
कृपालुर्बहिरागत्य तांश्चात्मानमदर्शयत् ॥
ब्रूत हरिहरीत्यूचे बाहू उत्तोलयन् प्रभुः ।
दिशश्चतस्र आपूर्य श्रीहरिध्वनिरुत्थितः ॥
प्रभुं दृष्ट्वा जनाः सर्वे जाताः संहृष्टमानसाः ।
ईश्वरोऽयमिति ज्ञात्वा ते महाप्रभुमस्तुवन् ॥

तेषां तं स्तवमाकर्ण्य श्रीनिवासोऽवदत् प्रभुम् ।
आत्मानं गोपयन् गेहे प्रकाशयसि किं बहिः ॥
कोऽशिक्षयदिमाँल्लोकान् ब्रुवन्तीमे च किं वचः ।
इदानीमात्मपाणिभ्यां मुखान्येषां त्वमावृणु ॥
यथा समुदितः सूर्यः स्वं गोपयितुमिच्छति ।
तथैवेदं चरित्रं ते न बोद्धुं शक्नुमो वयम् ॥
प्रभुः प्रत्यवदन्मुच्च श्रीनिवास विडम्बनाम् ।
यूयं सर्वे मिलित्वा मां निगृह्णीथ कियत् पुनः ॥
इति प्रोच्य स लोकेभ्यः शुभदृष्टिं समर्पयन् ।
गृहान्तरं प्रविष्टोऽभूत् पूर्णकामाश्च तेऽभवन् ॥
श्रीरघुनाथदासोऽथ नित्यानन्दमुपागतः ।
दधिचिपिटकैस्तत्र महोत्सवमकारयत् ॥
आज्ञां तस्य गृहीत्वासौ प्रभोश्चरणमाश्रयत् ।
दामोदरस्वरूपाय प्रभुस्तञ्च समार्पयत् ॥२७०
स ब्रह्मानन्दभारत्या चर्माम्बरममोचयत् ।
इत्येवं बहुधा लीलां षड्वर्षाणि चकार सः ॥
आदिद्वादशवर्षीणा कथिता सूत्रसन्ततिः ।
शेषद्वादशवार्षिक्याः श्रूयतां स्पष्टवर्णनम् ॥
य आशास्ते पदाम्भोजं श्रीरूपरघुनाथयोः ।
स ब्रूते कृष्णदासः श्रीचैतन्यचरितामृतम् ॥२७३

इति श्रीचैतन्यचरितामृते मध्यखण्डे मध्यलीला-
सूत्रं नाम प्रथमः परिच्छेदः ।

( क्रमशः )

---

# मध्याह्न-वर्णनम्

अनुवादकः—अध्यापक-श्रीदुर्गादासगोस्वामी एम. ए., साहित्यशास्त्री

आरूढः सविता युगान्तरमपि च्छायाध्वनीनैः समं
संक्रान्ता तरुमूलमाश्रिततया पृथ्वी प्रतप्तातपैः ।
मुग्धा योषिदिव प्रदाहगुरुणा तीव्रज्वरेण क्षणा-
दामीलन्नयना श्लथाङ्गलतिका मूका मृदु स्पन्दते ॥१

वायुर्वाति शनैर्विमन्थरगतिर्दिग्भ्रान्तपान्थोपमः
क्लान्त्येव स्खलितः प्रतिक्रममसौ शष्पाग्रमाकम्पयन् ।
कालस्रोत इव प्रमुच्य चलतां गाम्भीर्यमासादितं
दीर्घच्छन्दसि वा विलम्बितयतिच्छेदः किमप्यश्चति ॥२

स्वच्छन्दं मधुपप्रजापतिचयाः पक्षान् विचित्राँल्लघून्
धुन्वन्तः कुसुमाच्चरन्ति कुसुमेष्वन्येषु मध्वाग्रहात् ।
पर्याप्तैर्यवसैर्निमीलितदृशः पूर्णोदराः प्रान्तरे
छागाद्याः पशवः सुखाच्च कवलानुद्गीर्य चर्वन्त्यमी ॥३

निष्कूजस्तिमिताः पतङ्गनिवहाः पत्रान्तरालं गताः
प्रोल्लासान्मुखराः क्वचिच्च वलभीदेशेषु पारावताः ।
निर्मेघान्नभसः क्वचिच्च मरुतानीतः श्रुतिं गाहते
श्येनादेः प्रखरो ध्वनिः सुपरुषो मौनं विदार्योत्थितः ॥४

ग्रामीणाः करणाद् विरम्य शयनं स्वापार्थमध्यासते
पौरास्तु ग्लपिताः परिश्रमभरेणात्याकुलाः कर्मसु ।
वाणीसद्मसु च स्वपाठनियता विद्यार्थिनः सङ्गताः
कृत्स्ना एव दिशो भवन्ति मिलितैरावृत्तितारस्वरैः ॥५

तन्द्रावेशभरः क्रमेण वसुधानेत्राञ्चलं मुञ्चति
प्राणानां महसा पुनः प्रतिदिशं सन्धुक्षिता देहिनः ।
ध्माता राजपथाः प्रमत्तजनतासंमर्दकोलाहलै-
श्छाया दीर्घतरा शनैश्च निविड़ा प्रत्यक्षमालम्बते ॥६

---

# योगिभक्तचरितम्

( काव्यम् )

चतुर्थः सर्गः

(निबन्धकः—श्रीकाश्यपकविः)

( पूर्वानुवृत्तम् )

नवीनमार्गेण पुरः प्रसर्पतो
विद्यालयस्यास्य यशःप्रसर्पणात ।
विद्यार्थिनो वृद्धिमुपागताः क्रमात
फलोन्मुखी तस्य बभूव कल्पना ॥५०

सद्ग्रन्थविद्यास्विव तत्र यत्नतः
स ब्रह्मचर्यादिविधौ महामनाः ।
विद्यार्थिनां साधयति स्म शिक्षणम्
सुविस्तृतिर्भारतसंस्कृतेर्यतः ॥५१

योगादिमार्गं स दिदेश यत्नतो
विद्यार्थिनामात्मसमुन्नतेः कृते ।
यस्माच्छरीरेऽपि सुशक्तिसम्भवः
शरीरमाद्यं खलु धर्मसाधनम् ॥५२

विद्यालयस्यास्य विधौ निमज्जतो
जगाम भूयान समयो महात्मनः ।
तेनास्य जातो नियमव्यतिक्रमः
स्वकीयकृत्येषु वृतेषु पूर्वतः ॥५३

विशेषतो यावदलक्षि तेन तत
तावत स विद्यालयवीक्षणं जहौ ।

तद्भारमन्यत्र समर्प्य पूर्ववत
पुनः स्वकृत्ये समधारयन्मनः ॥५४
स खृष्टधर्मीयपुरोहितानां
प्रयत्नतो हिन्दुनये विपत्तिम् ।
तदातिमात्रां विततां समन्ता-
न्निरोद्धुमेकां विदधे समज्याम् ॥५५
नासीत्तदा काचन संसदन्या
या हिन्दुधर्मस्य हितानुकूल्यम् ।
लोके दिशन्ती हृदयं जनानां
निवर्तयेदन्यदिशि प्रसर्पत ॥५६

गगनाकाशवह्नीन्दुसम्मिते वङ्गवत्सरे ।
पुण्याक्षयतृतीयायां युगाद्यायां सभा हि सा ।
सनातनस्य धर्मस्य प्रचारार्थं प्रतिष्ठिता
धर्मप्रियसमाजेन तत एवाभिनन्दिता ॥५७
तस्या बहूनि कृत्यानि निर्णीतानि मनीषिणा ।
यानि धर्मोपकाराय सम्मतानि मनीषिणाम् ॥
व्याख्यानं हिन्दुशास्त्राणां धार्मिकग्रन्थसंग्रहः ।
हिन्दुधर्मप्रचाराय जनानां रीतिशिक्षणम् ॥५८
शास्त्रतत्त्वप्रचारार्थं ग्रन्थादीनां प्रकाशनम् ।
शिक्षार्थिनां सुयोग्यानां प्रशस्तमुपदेशनम् ॥५९
प्रचारकाणां केषाञ्चिद् वृत्त्या कृत्ये नियोजनम् ।
निराश्रयाणां निःस्वानां यथाशक्ति प्रपोषणम् ॥६०॥
दरिद्राणां बालकानां विना वेतनसंग्रहम् ।
शिक्षादानाय योग्याय विद्यालयनियन्त्रणम् ॥६१
इत्येतानि विधानानि तेष्वाप्तानि प्रधानताम् ।
येषां समन्वयादेषा सभा प्रकुरुते हितम् ॥६२

पारमार्थिकगीतादिसमन्वितमतः परम् ।
पत्रं सत्यप्रदीपाख्यं प्रचारं नीतवानसौ ॥६३

नियमेनाथ धर्मात्मा धर्म्यशास्त्राणि यत्नतः ।
तस्यां धर्मप्रचारिण्यां व्याख्यातुमुपचक्रमे ॥६४

अथो ग्लानिमुपायातः खृष्टधर्मस्तदुद्यमात् ।
हिन्दुधर्मो गतो वृद्धिं तदुत्कर्षाविबाधतः ॥६५

अधिष्ठिताचार्यवरेण सा सभा
ततः प्रभृत्यन्वहमुत्तरोत्तरम् ।
सनातनं धर्ममवर्द्धयद् बहु
च्युना प्रभावाच्च विरोधिदेशना ॥६६

चतुर्थसर्गः समाप्तः ।

---

## पञ्चमः सर्गः

अथो क्रमेणास्य महत्त्ववेदिनः
सुधीजनाः शिष्यपदं प्रपेदिरे ।
ध्यानप्रकाशप्रमुखाः सुमेधसः
प्रधानतां केचन तेषु लेभिरे ॥१

ध्यानप्रकाशप्रमुखा महान्तः
शिष्या हि सार्द्धं गुरुणैव तस्थुः ।
गुरोः पदाम्भोजयुगस्य सेवां
ते मेनिरे सर्वविधानसारम् ॥२

प्रातः प्रभृत्येव गुरोः क्रियासु
सहायतां ते विदधुः सहर्षम् ।
सङ्केतमात्रेण तदीयमिष्टं
सम्पादयामासुरमी सदैव ॥३

तद्भारमन्यत्र समर्प्य पूर्ववत
पुनः स्वकृत्ये समधारयन्मनः ॥५४

स खृष्टधर्मीयपुरोहितानां
प्रयत्नतो हिन्दुनये विपत्तिम् ।
तदातिमात्रां विततां समन्ता-
न्निरोद्धुमेकां विदधे समज्याम् ॥५५

नासीत्तदा काचन संसदन्या
या हिन्दुधर्मस्य हितानुकूल्यम् ।
लोके दिशन्ती हृदयं जनानां
निवर्तयेदन्यदिशि प्रसर्पत ॥५६

गगनाकाशवह्नीन्दुसम्मिते वङ्गवत्सरे ।
पुण्याक्षयतृतीयायां युगाद्यायां सभा हि सा ।
सनातनस्य धर्मस्य प्रचारार्थं प्रतिष्ठिता
धर्मप्रियसमाजेन तत एवाभिनन्दिता ॥५७

तस्या बहूनि कृत्यानि निर्णीतानि मनीषिणा ।
यानि धर्मोपकाराय सम्मतानि मनीषिणाम् ॥
व्याख्यानं हिन्दुशास्त्राणां धार्मिकग्रन्थसंग्रहः ।
हिन्दुधर्मप्रचाराय जनानां रीतिशिक्षणम् ॥५८

शास्त्रतत्त्वप्रचारार्थं ग्रन्थादीनां प्रकाशनम् ।
शिक्षार्थिनां सुयोग्यानां प्रशस्तमुपदेशनम् ॥५९

प्रचारकाणां केषाञ्चिद् वृत्त्या कृत्ये नियोजनम् ।
निराश्रयाणां निःस्वानां यथाशक्ति प्रपोषणम् ॥६०॥

दरिद्राणां बालकानां विना वेतनसंग्रहम् ।
शिक्षादानाय योग्याय विद्यालयनियन्त्रणम् ॥६१

इत्येतानि विधानानि तेष्वाप्तानि प्रधानताम् ।
येषां समन्वयादेषा सभा प्रकुरुते हितम् ॥६२

पारमार्थिकगीतादिसमन्वितमतः परम् ।
पत्रं सत्यप्रदीपाख्यं प्रचारं नीतवानसौ ॥६३

नियमेनाथ धर्मात्मा धर्म्यशास्त्राणि यत्नतः ।
तस्यां धर्मप्रचारिण्यां व्याख्यातुमुपचक्रमे ॥६४

अथो ग्लानिमुपायातः खृष्टधर्मस्तदुद्यमात् ।
हिन्दुधर्मो गतो वृद्धिं तदुत्कर्षाविबाधतः ॥६५

अधिष्ठिताचार्यवरेण सा सभा
ततः प्रभृत्यन्वहमुत्तरोत्तरम् ।
सनातनं धर्ममवर्द्धयद् बहु
च्युना प्रभावाच्च विरोधिदेशना ॥६६

चतुर्थसर्गः समाप्तः ।

---

## पञ्चमः सर्गः

अथो क्रमेणास्य महत्त्ववेदिनः
सुधीजनाः शिष्यपदं प्रपेदिरे ।
ध्यानप्रकाशप्रमुखाः सुमेधसः
प्रधानतां केचन तेषु लेभिरे ॥१

ध्यानप्रकाशप्रमुखा महान्तः
शिष्या हि सार्द्धं गुरुणैव तस्थुः ।
गुरोः पदाम्भोजयुगस्य सेवां
ते मेनिरे सर्वविधानसारम् ॥२

प्रातः प्रभृत्येव गुरोः क्रियासु
सहायतां ते विदधुः सहर्षम् ।
सङ्केतमात्रेण तदीयमिष्टं
सम्पादयामासुरमी सदैव ॥३

आज्ञां गुरोर्वेदविधानतुल्याम्
अलङ्घनीयां मनसि प्रचक्रुः ।
सन्तोषणार्थञ्च गुरोः सदैव
समुत्सुकास्ते कृतिमन्वतिष्ठन् ॥४

आचार्यवर्यः स भृशं विमुग्धः
शिष्यैर्वृतः कृष्णगुणान् प्रगायन् ।
नानाविधाध्यात्मिकतत्त्ववादी
शिष्यान्तरस्थं तिमिरं बिभेद ॥५

स एकदा महायोगी सुकियावर्त्मनि स्थिते ।
गेहे भावसमाविष्टस्तस्थौ शिष्यगणैर्वृतः ॥६
मोहयन्नेष तान् सर्वान् श्रीकृष्णप्रेमवार्तया ।
वङ्गभाषामयैः पद्यैरिदमाह सुविह्वलः ॥७
यावती वासना चित्तमभिव्याप्यावतिष्ठते ।
सा सर्वा दह्यतां नाथ ! तव वाङ्मयवह्निना ॥८
शोकस्य तीव्रतापेन तापितं हृदयं नृणाम् ।
त्वत्कृपामृतसेकेन प्रशाम्यतु दयानिधे ॥९
येभ्यो जनेभ्यः सम्प्राप्ता यावती मानसव्यथा ।
तत्तद्विस्मृतिरास्तां नः श्रुत्वाद्य तव वाङ्मयम् ॥१०
आशायाः सुदृढं स्थानं भावयामि यमन्तरे ।
स एव मज्जयत्यन्ते मां दुःखमयसागरे ॥११
सारं क्वापि न पश्यामि निःसारं सकलं जगत् ।
आश्रयामि परं मोहान्ममकारविडम्बनाम् ॥१२
स्वजनाः प्रियपुत्राद्याः समस्ताः क्षणभङ्गुराः ।
हे भ्रातः ! सम्प्रदृश्यन्ते सैकतस्येव बन्धनम् ॥१३
देहोऽयं कुरुते नृत्यं नर्त्यमानेव पुत्तली ।
यो नर्तयति तं नैव कोऽपि जानाति संसृतौ ॥१४

नृत्यकारी नटवरः स जनः कुत्र राजते ।
गुरो ! कथय तच्छ्रुत्वा तर्पयामि स्वजीवितम् ॥१५
दुःखतीक्ष्णकरोत्तापो न सोढुं शक्यते मया ।
देहि देव ! पदच्छायां देहि मे कृपया विभो ॥१६
सर्व एव पलायन्ते दुःखे निपतिते मयि ।
आहूतस्य विपत्पाते न कस्याप्युत्तरं लभे ॥१७
हास्यञ्च रोदनञ्चेति द्वयं मिथ्येति निश्चितम् ।
अन्धकारमयं सर्वं नेत्रयुग्मे निमीलिते ॥१८
धिग् धिग् धिक् शतकृत्वो मां हा हा धिग् बुद्धिवर्जितम् ।
अद्यापि प्रत्ययं कुर्वे यदीदृग्विधसंसृतौ ॥१९
दिनं याति निशा याति विषादमयरोदनैः ।
ईदृशं दग्धभाग्यं मे वदिष्यामि कथं नु तत् ॥२०
कियद् वद विमोक्ष्यामि दुःखवाष्पमतः परम् ।
देहि ते करुणाभिक्षामिति भिक्षां करोम्यहम् ॥२१
अद्यापि न कृतो हन्त गुरुपादसमाश्रयः ।
हा हा कीदृशपाषण्डो दुर्मतिः सुतरामहम् ॥२२
कति हा-हन्तवादेन यास्यन्ति मम वासराः ।
स्थितो व्यर्थमपेक्षेऽहं संसारतटिनीतटे ॥२३
गुरो ! पारस्य लाभाय न गतिः किं भविष्यति ।
पादौ तव प्रगृह्णामि कृपया वद हे वद ॥२४
नैराश्यतिमिरस्तोमैरभिव्याप्तिः कृता मम ।
समीक्षे यत्र तत्रैव सर्वं शून्यमयं भुवि ॥२५

( क्रमशः )

---

# वेदान्तविमर्शः

[ निबन्धक :—श्रीचारुकृष्णदर्शनाचार्यः ]

( पूर्वानुवृत्तम् )

इन्द्रियेण विषयसम्बन्धादन्तश्चित्तवृत्तेरुदयाच्च न वाह्यवृत्तेरपेक्षा, नचान्तः-करणं तैजसं परेषां नये भूतानां सत्त्वांशसमष्टितस्तदुत्पत्तेः "तैरन्तःकरणं सर्व्ववृत्तिभेदेन तद्द्विधे"त्युक्तेः। नैयायिकानां तेजोव्यतिरिक्तत्वान्नित्यत्वाच्च मनसः। अहङ्कारस्य सत्त्वांशादेकादशेन्द्रियोत्पत्तिः सांख्यानाम्। वेदान्तास्तु मनसस्तेजोव्यतिरिक्तत्वमात्मप्रभवत्वं चाहुः; तथाच श्रुतिः

"एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी" ॥ इति

"प्रजापतिर्वा इदमग्र आसीत् स आत्मानमैक्षत स मनोऽसृजत तन्मन आसीदि"ति चेति तत्रत्यं घटं पश्यामि तत्रत्यं शब्दं शृणोमीत्यनुभवेन चाक्षुषश्रावणयोर्वाह्यत्वाच्चक्षुःश्रवणयोस्तत्तद्देशवृत्तित्वं ताभ्यामात्मज्योतिषो विषयसम्बन्धः। उक्तश्रुतावाकाशाद् भेदेन श्रोत्रस्य कीर्त्तनादाकाशव्यतिरिक्तत्वं श्रोत्रस्य, यथा वायोः पृथगुपदेशात् प्राणस्य वायोर्भिन्नत्वं तद्वत्, तथाच सूत्रं पारमर्षं "न वायुक्रिये पृथगुपदेशादि"ति। प्राहुश्च भट्टाः—

"नावश्यं श्रोत्रमाकाशमस्माभिरभ्युपेयते।
नचानवयवं व्योम जैनसांख्यनिषेधतः ॥
तेनाकाशैकदेशो वा यद्वा वस्त्वन्तरं भवेत्।
कार्य्यार्थापत्तिगम्यं नः श्रोत्रं प्रतिनरं स्थितम्" ॥ इति

तस्मान्न कर्णशस्कुल्यवच्छिन्नं नभः श्रोत्रमिति ज्ञेयम्। दीपालोकः स्वप्रभाभिर्गृहमिव स्वज्योतिषात्मा देहं व्याप्नोति। तदुक्तं 'गुणाद्वालोकवदि'ति। तथाहि स्वकरोद्भासितसूर्य्यकान्तच्छुरितरश्मिभिर्मन्दिरं भानुमानिव ज्योतीरूप आत्मा स्वप्रभोद्भासितमनोनिःसरत्स्वप्रभाभिरिन्द्रिय-

सम्बद्धाभिर्देहं भासयति, "आत्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषास्ते" इति श्रुतेः। "अनन्ता रश्मयस्तस्य दीपवद् यः स्थितो हृदी"ति स्मृतेश्च। न चात्र रश्मयो नाड्यः प्रमाणाभावात् द्वासप्ततिः नाड्यश्च हृदयस्यैव न त्वात्मनः, "द्वासप्ततिसहस्राणि हृदयस्य नाड्य" इति श्रुतेः, न च नाडीनां रश्मित्वम्। भगवताप्युक्तं—

"यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत"॥ इति

मनसाऽयं करोति कामसङ्कल्पादीन्यात्मा सचिवेनेव कर्म्मजातं राजा, स च कर्म्माणि करोति प्रधानामात्येनेव कानिचित् कानिचिच्च तद्द्वारा भृत्यान्तरैस्तथात्मा मानसं कर्म्मजातं मनसैव यन्त्रेण करोति, दर्शनादीनि च करोति तद्द्वारेन्द्रियान्तरैः। राजा च वाक्येनैवामात्यं नियुङ्क्ते, आत्मा च स्वशक्त्या चित्तमिति प्रक्रिया। सर्व्वथैवात्मन एव कर्त्तृत्वं मनसश्च करणत्वं प्राप्तमिति प्रमाता जीवः प्रमाणानीन्द्रियाणि प्रमितिश्च विषयस्फुरणमित्यवदातम्।

प्रमाणचैतन्यविषयचैतन्ययोरभेदस्य प्रत्यक्षत्वप्रयोजकत्वं मनस इन्द्रियत्वानभ्युपगन्तॄणां विवरणानुगानामेव कल्पनाजालप्रसूतं, न तच्छ्रुतिसूत्रसम्मतं मनस इन्द्रियत्वस्य सूत्रकृतैव स्वहस्तितत्वादनिन्द्रियत्वं न वेदान्तसम्मतमिति स्थितम्। अन्तःकरणवृत्तेर्बहिर्निष्ठत्वं च योगानामेव, न च योगानुशिष्टा वेदान्ताः। यथाहुस्तत्रभवन्तो योगभाष्यकाराः "इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणमिति। नचान्तरधर्म्माणां साक्षिभास्यत्वम् अन्तःकरणोपहितचैतन्यस्य साक्षित्वे प्रमाणाभावात् चैतन्यस्यैव प्रकाशरूपस्य भासकत्वात्। नचान्तःकरणावच्छिन्नचैतन्यं जीवः प्रमाणाभावात् योगसम्मतत्वाच्च ब्रह्मांशस्यैव जीवत्वादित्युक्तम्। नचात्मा कूटस्थो वेदान्तेष्वभावात् साक्षिशब्दस्यापि वेदान्तेष्व-

दर्शनात् दर्शनाद्यात्मकौटस्थ्यवादिनां सांख्यानां तन्त्रे। एवमीश्वरसाक्षी च ज्ञेयः।

योगभाष्यरीत्या वृत्तेर्बहिर्निर्गमाभ्युपगमे वृत्तेर्विषयसम्बन्ध एवास्तु प्रत्यक्षत्वप्रयोजकः कृतं वृत्तिचैतन्यविषयचैतन्ययोरभेदपर्य्यन्तानुसरणेन, तदर्थमुपाध्योरेकदेशस्थत्वमेककालीनत्वं विषयस्य वर्त्तमानत्वं च वक्तव्यं तच्च महद् गौरवमेवावहतीति भाव्यम्।

न वा प्रमात्रभेदात् प्रत्यक्षत्वं विषयस्य अन्तःकरणावच्छिन्नचैतन्यस्य प्रमातृत्वे विषयदेशपर्य्यन्तप्रततान्तःकरणस्य बृहत्त्वात् तदवच्छिन्नचैतन्यमपि तावत्परिमितं बृहदेव वाच्यं, तथा सति जीवस्य मध्यमपरिमाणत्वादनित्यत्वापत्तिः। न चैतदिष्टम्। "एषोऽणुरात्मा चेतसा वेदितव्यः" "उत्क्रान्तिगत्यागतीनाम्" "स्वशब्दोन्मानाभ्याम्" इति जीवाणुत्ववादिश्रुतिसूत्रविरोधश्च स्यात्।

अधिष्ठानसत्तातिरिक्तसत्ताया अभावे सत्ताशून्य एव स्याद् विषयः। न चारोपादधिष्ठानसत्ता विषयमुपसर्पति ज्ञानमात्रत्वादारोपस्येति निःसत्ताको विषयस्तुच्छ एव स्यादिति तस्यार्थक्रियाकारित्वानुपपत्तिः। दृश्यते च भवतां मरीच्यम्भसा स्नानपानाद्यनिष्पत्तिः। रज्ज्वां सर्पभ्रमाद् भयकम्पादिश्च ज्ञानस्यैव कार्य्यं न विषयस्य, तस्य चोत्पन्नत्वेन स्वरूपतः सत्यत्वात् न च भयादेरर्थत्वमिति।

मिथ्याज्ञानस्थले न प्रातिभासिकविषयोत्पत्तिः किन्तु निर्विषयमेव जायते ज्ञानं मिथ्याकथावत्, तस्य च स्वरूपतः सत्यत्वेऽपि विषयराहित्यान्मिथ्यात्वव्यवहारः। तथाहि दोषसमवहितात् शुक्ताविन्द्रियसन्निकर्षाद् रजतसंस्कारवशाच्चान्तर्जातायां रजताकारवृत्तौ ज्ञानं रजतस्य, दग्धवेत्रबीजात् कदलीकाण्डोत्पत्तिवद् विरुद्धज्ञानोत्पत्तिर्दोषसामर्थ्यात् तदेव च बाधाभावादिन्द्रियद्वारा पुरोवर्त्तिनि भासते शुक्तिकादौ, ततश्चेदं रजतमितिव्यपदेशो ज्ञानमात्रान्वयव्यतिरेकानुविधायित्वात् तस्येति प्रक्रिया। नातः स्मृतेः सन्निकर्षतापेक्षा, न चापणस्थरजताध्यक्षं नाप्यनिर्व्वचनीयरजतोत्-

पादो नापि भ्रमापलापापत्तिरित्यनवद्यम्। अतः सत्यरजतवद् बाधोत्तरं नात्र रजतं दृष्टं नष्टं वा किन्तु शुक्तिरेव रजतात्मनाभादित्येव प्रत्ययो लौकिकानां मिथ्यारजतोत्पादे चात्र रजतं जातं दृष्टमियत्कालमिदानीं विनष्टमित्यवश्यमवक्ष्यत्, नच तथा ब्रूते। रजतमिदमितिभ्रमकालीनाभिलापश्च सञ्जाताज्ज्ञानमात्रादेव न विषयवशादिति प्रलापतुल्यत्वादनादेय एव, नात्र रजतं जातमितिबाधकालीनाभिलापश्च प्रमाणसिद्धत्वेन बलवत्त्वादुपादेय एवेति बोध्यम्। जगन्मिथ्यात्ववादिभिर्बौद्धैरेव मिथ्यादृष्टान्तार्थं बलादास्थीयते मिथ्याविषयो रज्जुसर्पादिर्नान्यैर्वैदान्तिकादिभिरिति दिक्। एतेन स्वप्नोऽपि व्याख्यातस्तत्रापि न रथादिसृष्टिर्विवक्षितेति दर्शितं "सन्ध्ये सृष्टिराह ही"ति सूत्रव्याख्यायाम्।

विशुद्धस्यैव ब्रह्मणो जगन्निमित्तोपादानत्वं सर्व्वत्रोद्गीयते श्रुतिसूत्रकाण्डे न त्वविद्यायाः कारणत्वं कुत्रापि, न च सृष्टिप्रकरणेष्वविद्याशब्दोऽपि दृश्यते, दृश्यते च कर्म्मप्रकरणेष्वेव। वेदान्तनये चाविद्यापदस्य कर्म्मपरत्वं मायापदस्य च प्रज्ञापरत्वं दर्शितं सूत्रभाष्ये, यदेव "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेये"ति सतो बहुभवनेक्षणमुक्तं तदे"वेन्द्रोमायाभिः पुरुरूप ईयते"इति मायापदेन बहुभवनहेतुतया दर्शितं मायापदस्य प्रज्ञापरत्वात् "माया वयुनं ज्ञानमभिख्येति प्रज्ञानामानी"ति निघण्टुकोषात। अत एव स्वप्नस्य ज्ञानमात्रस्वरूपत्वात् मायामात्रत्वमुक्तं "मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वादि"ति। न त्वन्यन्मायापदं ब्रह्मसूत्रे सृष्टिप्रकरणेऽप्युक्तं नाप्यविद्यापदमपीति भाव्यम्। एतेनाविद्यामायादिपदानां पर्य्यायता पद्मपादिकोक्ता निरस्ता, सांख्यादिसम्मतत्वाच्च। न"चेन्द्रो मायाभिरि"ति मायापदं मिथ्याऽविद्यापरम् असिद्धेः, सृष्टिप्रकरणेष्वविद्यापदाभावात "अतोऽनिर्व्वाच्याविद्याद्वितीयसचिवस्ये"ति यदविद्यासहकृतस्यैव ब्रह्मणः कारणत्वमिष्यते तैस्तस्या एवाविद्यायाः सृष्टिप्रकरणेष्वभावात सर्गानुपपत्तिरिति। तस्माद् वेदान्तसेवितिर्वेदान्तचर्य्यायां परिहर्त्तव्योऽविद्यादिशब्दगन्धोऽपीन्द्रजालपरः सर्व्वथैव। मायाबिला-

एभिरेव प्रच्छन्नबौद्धैर्वेदान्तव्याख्याच्छद्मना स्वीयशून्यवादख्यापनार्थमेव प्रविपदमविद्यामायादिपदमिन्द्रजालपरं सपरिकरमुच्चैर्जोघुष्यते व्यामोहायैव वराकाणां मूढानाम्, तदृषीमद्भिर्न्न ह्यतत्त्वबुभुत्सुभिः श्रुतिसूत्रैकश्रद्धावद्भिर-बधातव्यम् सर्व्वथेति ।

नेदं रजतमिति निषेधेन प्रातिभासिकरजतस्य बाधेऽपि त्रैकालिकनिषेध-प्रतियोगित्वं मिथ्यात्वमिति मिथ्यालक्षणस्य मिथ्यात्वमेव पूर्व्वं ततसत्त्वात्, लौकिकपारमार्थिकत्वेन निषेधमादाय तदुपपत्तावपि न तेन प्रातिभासिक-रजतस्य बाधः व्यधिकरणधर्म्मावच्छिन्नाभावस्य प्रतिबन्धकत्वाभावात् । नेदं रूप्यमिति व्यावहारिकनिषेधेन सतो वा प्रातिभासिकरजतस्य बाधः ?

न च ब्रह्मभिन्नं सर्व्वं मिथ्या ब्रह्मभिन्नत्वात् शुक्तिरूप्यवदिति वाच्यं मिथ्यात्वे मरीच्यद्भिः स्नानपानाद्यनिष्पत्तिवत् घटपटादिभिरर्थक्रियाद्य-निष्पत्तिप्रसङ्गात् । अनुमानं चेदं न प्रमाणं पक्षतावच्छेदकहेत्वोरेकत्वेन परामर्शासम्भवात्, सर्व्वपदं चाव्यावर्त्तकम् ।

न "चांशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः । अंशित्वादितरां-शीवे"तिमिथ्यालक्षणं युक्तमिति वाच्यम्, अत्र पटस्य समवेतत्वेन हेतो-र्बाधितत्वात्, तन्निष्ठात्यन्ताभावाप्रतियोगित्वं ततसमवेतत्वे प्रयोजकम् । प्रयोजकत्वं चेह व्यापकत्वमात्रं न तु समव्यापकत्वं गौरवादप्रयोजकत्वाच्च एतेन केवलान्वयिधर्म्मस्य एतत्समवेतत्वापत्तिरित्यद्वैतसिद्धयुक्तं निरस्तम् । यद्येतत् पटस्यैतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वं न स्यात् तदा एतत्तन्तु-समवेतत्वं न स्यादित्यनुकूलस्तर्कः । स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ता-भावप्रतियोगित्वं मिथ्यात्वमित्यपि न लक्षणमव्यापकत्वात्, स्वावयवेष्व-वयविनां वृत्तेरिति बोध्यम् । वेदान्तनये कार्य्यकारणयोरभिन्नत्वात् कारणत्वाभिमतवृत्तिभेदप्रतियोगित्वस्यैव मिथ्यात्वात् तन्तुवृत्तिभेदप्रति-योगित्वाभावाच्च पटस्य सत्यत्वमेव ।

न च जगद्विभ्रमाधिष्ठानत्वं ब्रह्मण उपादानत्वं मायाकार्याणां मिथ्या-भूतानामधिष्ठानादर्शनात्, यत्र कुत्रापि मायिकानां गजादिसर्जनदर्शनात् ।

( क्रमशः )

11. **Pradhakara-vijayam** of Nandishvara—Edited . Mahamahopadhyaya Anantakrishna Shastri Vedantavisharac and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharys—Edited by Pt. Bamacharan Kvyatirtha. As. 12 ; As. 10. (for membera).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re. 1-8 ; Re, 1-4 ( for members ).

14. **Naia-damayantlyam** (a new Drama ) of MM, Kalipada Tarkacharya. Rs. 1-8 ; Rs. 2 ( for members ).

15. **Prashastapada-bhashyam**—Edited by MM, Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2 ; Re. 1-8 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr, Pashupatinath Shastri M. A,, B. L., Ph. D with the assistance of Prof. Chintaharan Chakravarti, M. A. Rs 5 ; Rs. 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri, Rs. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed, by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM, Kalipada Tarkacharya. Rs. 7 ; 6 ( for members).

21 **Manodutam** of Vishnudasa—Ed. by prof. Chintahara Chakravarti. M. A. Re. 1-4 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs, 2 ; Re. 1-8 ( for members).

23. **Devisatakam** of Mahmahopadhyaya Krishanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M. A., As. 8.

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kali pada Tarkacharya, Rs. 5 ; Rs. 4-8 ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Re. 1-8 ; Re. 1-4 ( for members ).

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदः चतुःषष्ट्यधिकत्रयोदशशततम-( १३६४ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वैयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्
१६८।१, राजा-दीनेन्द्रष्ट्रीट्,
संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

---

## अधस्तनग्रन्थाः

### सद्य एव प्रकाशिता भवितारः

१। हलायुध-प्रणीतं ब्राह्मण-सर्वस्वम्। अध्यापक—श्रीदुर्गामोहन-भट्टाचार्य एम. ए. सांख्यतीर्थ-सम्पादितम्।

२। माणवक-गौरवम्—म. म. श्रीकालीपदतर्काचार्यप्रणीतमपूर्वमभिनयोपयोगिनाटकम्।

३। कपालकुण्डलारूपकम्—अध्यापक—श्रीविष्णुपद भट्टाचार्य एम. ए. काव्यतीर्थसङ्कलितमभिनयोपयोगिरूपकम्।

४। चित्रचम्पूः—वाणेश्वरविद्यालङ्कारकृता—अध्यापक—श्रीजानकीनाथ-शास्त्रिसम्पादिता।

